ÂYURVEDÎYA GRANTHAMÂLÂ.

No. II.

# RASAPRAKÂSHA SUDHÂKARA

BY

YASHODHAR.

EDITED AND PUBLISHED

BY

VAIDYA JÂDAVJI TRICUMJI ÂCHÂRYA,

No. 372, Borâ Bazâr Street, Fort, Bombay.

BOMBAY:

Printed by B. R. Ghânekar, at the "Nirnaya-Sâgara" Press,
23, Kolbhat Lane, for the Publisher.

*Price Re. 1.*



1911 A. D.

आयुर्वेदीयग्रन्थमाला।

द्वितीयं पुष्पम्।

श्रीयशोधरविरचितो

# रसप्रकाशसुधाकरः।

आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा

संशोधितः

प्रकाशितश्च।

सं. १९६७.

मूल्यमेको रूप्यकः।

# भूमिका ।

रसप्रकाशसुधाकरकर्ताऽयं यशोधरः पद्मनाभसूनुः, श्रीगौड (श्रीगोळ)-ब्राह्मणजातीयः, सौराष्ट्र (काठिआवाड-सोरठ) देशान्तर्गतजीर्णदुर्गाख्यनगरनिवासी चासीदिति तेनैव ग्रन्थान्ते उक्तादात्मवंशादिवर्णनात्प्रतीयते [1]। श्रीगौडब्राह्मणानां वसतिश्च संप्रति सौराष्ट्रदेशे गुर्जरदेशे चोपलभ्यते । जीर्णदुर्गनगरं च संप्रति 'जुनागढ' इति नाम्ना प्रसिध्यति । स चायं यशोधरः ख्रिस्तीय त्रयोदशशताब्दयां समजनीति **'डा. प्रफुल्लचन्द्रराय'** इत्येतैः **भारतीयरसायनशास्त्रेतिहास**नामके ग्रन्थे प्रतिपादितम् । रसरत्नसमुच्चयकर्त्रा वाग्भटेन च स्वग्रन्थे बहवो विषया अस्माद्ग्रन्थादुद्धृताः । ग्रन्थेऽस्मिन् रसस्याष्टादशसंस्काराः, रसबन्धभस्मविधानं, स्वर्णादिधातुमहारसोपरस-रत्नादीनां लक्षण-गुण-शोधन-मारणादिकं, एकशतरसप्रयोगाः, यन्त्र-मूषा-पुटादीनां लक्षणानि, रसौषध्यादयः, धातुकौतुकं, वाजीकरणशुक्रस्तम्भयोगाश्चेत्यादयो रसशास्त्रप्रतिपाद्याः प्रायः सर्वेऽपि विषया नातिसंक्षेपविस्तराभ्यां अतिविशदतयोपवर्णिताः सन्ति । अतोऽयं ग्रन्थोऽल्पेनायासेन रसशास्त्रतत्त्वज्ञाने भिषजां, रसशास्त्रे व्युत्पित्सूनां छात्राणां चातीवोपयुक्तो भविष्यति। ग्रन्थस्यास्य मुद्रापणार्थं आदर्शपुस्तकद्वयमुपलब्धम् । एकं अस्मत्पितृव्याणां वैद्यगङ्गाधरशर्मणां संग्रहालयस्थं, अपरं च सोलापुरनगरवास्तव्यानां 'नानावैद्य' इति प्रसिद्धानां संग्रहस्थम्[2] । ग्रन्थश्चायं व्याकरणदृष्ट्या काव्यदृष्ट्या च दोषबहुल आसीत् । तस्य संशोधने चास्मत्परमसुहृदां व्याकरणन्यायसाहित्याद्यनेकशास्त्रावगाहनगम्भीरमतीनां **पं० रमापतिमिश्राणां** साहाय्येन यथामति कृतो यत्नः । संदिग्धस्थलेषु च रसेन्द्रचूडामणिरसरत्नसमुच्चयादिग्रन्थसाहाय्येन टिप्पणमपि दत्तम् । ग्रन्थादौ सुविस्तृता विषयानुक्रमणिकाऽपि दत्ता । एवं पुस्तकस्यास्य संशोधनादौ यावच्छक्यं श्रमः कृतस्तथाऽपि मनुष्यत्वसमनियताक्षमप्रमादादिदोषाज्जातं स्खलनं क्वाप्युपलभ्येत चेद्गुणैकपक्षपातिभिर्विद्वद्भिः संशोधनीयं क्षन्तव्यश्चाहमित्यभ्यर्थये—

**यादवशर्मा.**

---

1. See history of Hindu chemistry Vol. II Introductin Page 46.

२. नैतत्पुस्तकमस्माकं हस्तगमासीत् । किन्तु अस्मन्मित्रैः 'त्र्यम्बक गुरुनाथ काळे' इत्येतैरेतत्पुस्तकाधारतया अस्मत्प्रेषितं पुस्तकं संशोधितम् ॥

# रसप्रकाशसुधाकरान्तर्गतविषयानुक्रमणिका ।



## षष्ठोऽध्यायः
## ( उपरसनिरूपणम् )



## सप्तमोऽध्यायः
## ( नवरत्ननिरूपणम् )

# रसप्रकाशसुधाकरपाठसंशोधनम् ।

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| तस्मिन् समीपे | तत्संनिधाने | १ | ८ |
| साऽलङ्कृता | स्वलङ्कृता | ,, | ११ |
| नियमं च सुदीपनम् | नियामनसुदीपने | २ | ९ |
| दत्वा | [1]दत्त्वा | ५ | ६ |
| चतुर्यामावधिं कुरु | कार्यं यामचतुष्टयम् | ,, | ९ |
| प्रवक्ष्यामि नियमं | प्रवक्ष्ये नियमनं | ६ | ११ |
| मानं मया कर्म | मया मानकर्म | ८ | ९ |
| द्रुतिर्बाह्यस्य कथ्यते | बाह्या सा [2]कथ्यते द्रुतिः | ९ | १७ |
| ऽत्युच्छिमानत्वं | ऽनुच्छिद्यमानत्वं | ,, | २८ |
| ताप्यसत्वं | [3]ताप्यसत्त्वं | १० | ३ |
| काचपात्रे | [4]कांस्यपात्रे | ,, | १६ |
| सोऽपि | सोऽयं | ११ | १४ |
| ना जारितः | नो जारितः | १२ | १२ |
| बन्धकरो | [5]वेधकरो | ,, | ,, |
| तुवरी | [6]कुनटी | ,, | २१ |
| पारदश्चापि | [7]पारदस्यापि | ,, | २८ |
| शास्त्रविदब्रीत् | शास्त्रविदोऽब्रुवन् | १३ | १८ |
| ताम्रकल्कीकृतेनैव | ताम्रकल्कीकृतं मृतं | १४ | २४ |
| ततस्तैले धूर्ततैलसमायुते | [8]महातैले धूर्ततैलेऽत्रराशिके | १६ | १२ |
| निवेश्य फलधूर्तके | फले धौर्ते निवेश्य च | ,, | २२ |
| चोत्पलैकप्रवर्धानि | एकैकोत्पलवृद्धितः | १७ | २६ |
| बन्धमाप्तोति | बन्धमाप्नोति | १८ | २ |
| सहदेव्यो रसेन च | सहदेवीरसेन च | १९ | १३ |

१ अन्यत्रापि यत्र 'दत्वा' इत्युपलभ्येत तत्रापि 'दत्त्वा' इति तकारद्वित्वमेव पठनीयम् । २ पाठान्तरम् । ३ अन्यत्रापि यत्र 'सत्वं' इत्युपलभ्येत तत्रापि 'सत्त्वं' इति तकारद्वित्वमेव पठनीयम् । ४ पाठान्तरम् । ५ पाठान्तरम् । ६ पाठान्तरम् । ७ पाठान्तरम् । ८ पाठान्तरम् ।

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| निम्बूकद्रावैः | निम्बुकद्रावैः | २१ | २३ |
| एतेषां | एतासां | २२ | ५ |
| सूर्यकान्तवत् | सूर्यकान्तिवत् | ,, | १० |
| साक्षात् | सम्यक् | ,, | २२ |
| शुभ्रचन्द्रप्रभानिभम् | शुभ्रं चन्द्रप्रभानिभम् | २४ | १ |
| निषिञ्चयेत् | निषेचयेत् | ,, | १० |
| विमिश्रितम् | विमिश्रिताः | २५ | १७ |
| शोभितं | सुशोभितं | २८ | ९ |
| रससमानमितघृतमूषया | रससमानमितं घृतमूषया | ,, | १० |
| रसवरस्य हि | रसवरस्य शुभं हि | ,, | १२ |
| तनुमोचदलोपरि | तदनु मोचदलोपरि | ,, | १९ |
| प्रदर्शिताऽयं | प्रदर्शितेयं | ३० | ३ |
| विभक्तिकाजलैः | भक्तिकाजलैः | ,, | ११ |
| मसृणखल्वतले | मसृणखल्वतलेषु | ,, | १२ |
| भस्मसूतकथनं | सूतभस्मकथनं | ,, | २१ |
| सम्यक् वल्लमेकं प्रमाणं | सम्यक् चैकवल्लप्रमाणं | ३६ | ४ |
| दुनार्म- | दुर्नाम- | ,, | ५ |
| संखन्यमाने हि | संखन्यमानायां | ,, | १३ |
| अशीतिर्वातजान् | अशीतिं वातजान् | ३७ | २४ |
| विंशतिः | विंशतिम् | ,, | ,, |
| वराहेण खराग्निना | वाराहेणाखराग्निना | ४० | ११ |
| विंशतिः | विंशतिं | ,, | १७ |
| त्रपुरुत्तमम् | त्रपु चोत्तमम् | ४१ | १८ |
| धम्यमाने | ध्मायमाने | ४३ | १० |
| नागाभ्रनामानं | नागाभ्रनामेदं | ,, | १९ |
| रक्तवर्णसमुद्भवम् | रक्तवर्णसमुज्ज्वलम् | ४५ | २५ |
| तण्डूलीयशिवारसैः | तण्डुलीयशिफारसैः | ४५ | १६ |
| भिषग्वरः | भिषग्वर ! | ४५ | ७ |
| साहिष्यपञ्चकेन | महिषीपञ्चकेन | ४६ | १६ |
| शक्यते | शक्यन्ते | ४७ | १४ |
| वलीपलितनाशनः | वलीपलितनाशनम् | ४८ | २८ |
| वैरकं | रेकं च | ४९ | ११ |

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| शूलहा | शूलघ्नी | ,, | २४ |
| निन्बूरसेन | निम्बूरसेन | ५० | १३ |
| संपिष्ट्वा | संपिष्ट्य | ,, | ,, |
| कुपिकान्तरे | कूपिकान्तरे | ,, | २१ |
| अनुपानविशेषण | अनुपानविशेषेण | ,, | २६ |
| वैक्रान्तकान्तत्रिफलात्रिकटुभिः | वैक्रान्तकान्तत्रिकटुत्रिफला० | ५२ | २ |
| खर्परं रेतितं शुद्धं स्थापितं | खर्परो रेतितः शुद्धः स्थापितो | ,, | २२ |
| कफहा | कफहृत् | ५६ | ३ |
| नेत्रव्याधित्रिदोषहा | नेत्रव्याधित्रिदोषहृत् | ,, | ,, |
| त्रिदोषहा | त्रिदोषहृत् | ५७ | १६ |
| पावतीपुष्पसंभवः | पार्वतीपुष्पसंभवः | ५८ | १० |
| नेत्ररोगहा | नेत्ररोगहृत् | ६० | २५ |
| समभागिकम् | भागतः समम् | ६१ | ७ |
| प्रोक्ता | या तु | ,, | २२ |
| च | या | ,, | २४ |
| दुर्नामानं वै | दुर्नामानं | ६५ | ९ |
| चेदिन्द्रचापस्य वर्णम् | चेदिन्द्रचापेन तुल्यम् | ६६ | १ |
| स्त्री नो | नो स्त्री | ,, | ५ |
| प्रयातीति | प्रयातीह | ६७ | ३ |
| सर्वेषु कार्येषु च योजनीयम् | सर्वे कार्ये योजनीयं सुखेन | ६८ | २२ |
| त्रिकटुं नियोज्य | त्रिकटु प्रदत्त्वा | ७० | २३ |
| माषमात्ररसमेव भक्षिभतं शाण-मानमरिचैर्युतं | माषमात्ररस एष भक्षितः शाणमानमरिचैर्युतः | ७१ | १४ |
| योजितं तच्च सौरसदलद्वयान्वितं | योजितः स च सौरसदल-द्वयान्वितः | ,, | १५ |
| गुञ्जाद्विप्रमाणं | गुञ्जायुग्ममा | ७२ | ३ |
| चापि | चाथो | ७३ | ७ |
| स्वे रसेनाथ | स्वै रसैश्चापि | ७४ | १२ |
| हन्याचायं ग्रहणीं दोषजां वै | हन्याच्चेदं ग्राहिणीं[1] दोषजाताम् | ,, | १६ |
| परं | परां | ७५ | १६ |

१ ग्रहिणीमित्यर्थः ।

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| विधाय | विधेहि | ७५ | १ |
| रसवरं सकलेन समं हि वै | पारदं च सकलेन तुल्यकं | ,, | २५ |
| विमर्द्य च | विमर्द्य | ,, | ,, |
| चापि | सार्धं | ७६ | ९ |
| चित्रार्द्रसंमिश्रितम् | चित्रार्द्रसंमिश्रितं | ,, | ११ |
| सुमृदया | चिक्कणमृदा | ,, | १८ |
| शुष्कपाण्डु– | शोषपाण्डु– | ,, | २३ |
| पुटं पश्चाज्वालयेन्नागसंज्ञं | दद्यात्पश्चान्नागसंज्ञं पुटं हि | ७८ | ४ |
| ग्रहणिकामग्नेश्च सन्धुक्षणः | ग्रहणिकां हन्त्यग्निसन्धुक्षुणः | ,, | १० |
| पाचयेयद्धि | पाचयेद्धि | ७९ | १२ |
| द्वयं समं चूर्ण्यं | द्वयं च संचूर्ण्य | ,, | २० |
| त्रिःप्रमाणं | त्रिप्रमाणं | ८१ | २२ |
| वक्रवल्ह्यब्दनादाः | वज्रवल्ह्यब्दनादाः | ८२ | १० |
| जातीफलमर्धमागिकं | जातीफलमर्धभागकं | ८४ | २२ |
| भक्षितं वै | भक्षयित्वा | ८६ | २० |
| लिहेदेरण्डतैलेन | लिह्यादेरण्डतैलेन | ८७ | १२ |
| कान्तिप्रदः कामिनाम् | कान्तिप्रदो देहिनाम् | ,, | २१ |
| स्नुग्दुग्धेन भृङ्गकैर्वा | स्नुग्दुग्धैर्भृङ्गकैर्वा | ८८ | ८ |
| एषः | एष | ,, | १२ |
| मर्द्य च वेष्टितं | मर्दितवेष्टितं | ,, | २२ |
| रसैरेषां | तोयैरेषां | ९० | ५ |
| ततो घर्मे | पश्चाद्धर्मे | ,, | १६ |
| ग्रहण्यामर्शोशोफे | ग्रहण्यामर्शःशोफे | ,, | २३ |
| शीतलमत्र | शीतलमत्र चापि | ९१ | ५ |
| लिहेच्च | च लिह्यात् | ९२ | २१ |
| रसैमर्द्य | मर्द्यं तोयैः | ९३ | १७ |
| वै खे | खे | ९५ | २४ |
| –तालकेभ्यो | –तालकानां | ९६ | १८ |
| चैकभागिकम् | चैकभागकम् | ९७ | १३ |
| सर्वे रोगगणापहाः | सर्वरोगविनाशनाः | ९९ | ८ |
| कतिचिदखिलशास्त्रे | कुहचिदखिलशास्त्रे | ,, | १० |
| रसोषधिः ? | रसौषधिः | १०२ | २२ |

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| कृत | कृतः | १०५ | ६ |
| कच्छयन्त्रन्तर्गत– | कच्छयन्त्रान्तर्गत | १०८ | १७ |
| करहाहिका | करहाटिका | १०८ | ७ |
| –गन्घपिष्टक– | –गन्धपिष्टक– | ,, | २८ |
| श्रुतं वै शाश्वतः खलु | किञ्चिद्वै शाश्वतः श्रुतम् | ११ | ८ |
| द्वौ वर्णौ वर्धते सम्यङ्नात्र | वर्णद्वयं वर्धते च नात्र | ११६ | २२ |
| रविणो बीजं | च रवेर्बीजं | १२९ | ९ |
| साधयेत | साधयेत् | ,, | ११६ |

षष्ठाध्याये एकोनसप्ततितमश्लोकानन्तरमयं पाठोऽधिको ज्ञेयः "पाषाणगैरिकं चैकं द्वितीयं स्वर्णगैरिकम् । पाषाणगैरिकं प्रोक्तं कठिणं ताम्रवर्णकम् ॥ अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम् । स्वादु स्निग्धं हिमं नेत्र्यं कषायं रक्तपित्तनुत् ॥ हिक्कावमिविषघ्नं च रक्तघ्नं स्वर्णगैरिकम् । पाषाणगैरिकं चान्यत् पूर्वस्मादल्पकं गुणैः ॥ गैरिकं तु गवां दुग्धैर्भावितं शुद्धिमृच्छति । गैरिकं सत्त्वरूपं हि नन्दिना परिकीर्तितम्" इति ।

## मङ्गलाचरणम्[1]।

शशिकलाकलितं हि शुभाननं शिवनिधानमथो ऋषिपूजितम्।
जननपालनसंहरणात्मकं हरिहरं प्रथमं प्रणमाम्यहम् ॥ १ ॥
कुमुदकुन्दसिताम्बरधारिणीं विमलमौक्तिकहारसुशोभिताम्।
सकलसिद्धगणैरपि सेवितां परिणमामि भजामि च शारदाम् ॥ २
वदनकुञ्जरमभ्रदलद्युतिं त्रिनयनं च चतुर्भुजवामनम्।
कनकरत्नसुशोभितशेखरं गणपतिं प्रथमं प्रणमाम्यहम् ॥ ३ ॥
गिरिशधाम सदा महदद्भुतं सकलरोगविघातकरं परम्।
सकलसिद्धिसमूहविशारदं प्रणतपापहरं भवपारदम् ॥ ४ ॥

## ग्रन्थानुक्रमणिका।

प्रथमं पारदोत्पत्तिं कथयामि यथातथम्।
ततः शोधनकं तस्य तथाऽष्टादश कर्म च ॥ ५ ॥
चतुर्धा बन्धविज्ञानं भस्मत्वं सूतकस्य च।
धातूनां शोधनं चैव मारणं गुणवर्णनम् ॥ ६ ॥
अष्टौ महारसाः सम्यक् प्रोच्यन्तेऽत्र मया खलु।
तथा चोपरसानां हि गुणाः शोधनमारणम् ॥ ७ ॥
द्रुतिपातं च सर्वेषां कथयामि सुविस्तरम्।
रत्नानां गुणदोषाश्च तथा शोधनमारणम् ॥ ८ ॥
क्रामणं रञ्जनं चैव द्रुतिमेलनकं रसे।
रसांश्च शतसंख्याकान् कथयामि सुविस्तरात् ॥ ९ ॥
औषधीनां समाख्याता भेदाश्चत्वार एव च।
दिव्यौषध्यो रसौषध्यः सिद्धौषध्यस्तथा पराः ॥ १० ॥
महौषध्य इति प्रोक्ता यन्त्राण्यथ पुटानि च।
मूषाश्चैवं हि धातूनां कौतुकानि समासतः ॥ ११ ॥
वाजीकरणयोगाश्च शुक्रस्तम्भकराश्च ये।
नातिसंक्षेपविस्तारात् ग्रन्थेऽस्मिन् परिकल्पिताः ॥ १२ ॥

---

[1] अयं द्वादशश्लोकात्मकः पाठः प्रथमाध्यायमुद्रणानन्तरं सोलापुरस्थनानावैद्यानां पुस्तकात्प्राप्तः। अतोऽस्माभिः परिशिष्टत्वेनात्र निवेशितः। अयं च प्रथमाध्यायारम्भ एव पठनीयः।

# आयुर्वेदीयग्रन्थमाला ।

श्रीयशोधरविरचितो

## रसप्रकाशसुधाकरः ।

### प्रथमोऽध्यायः ।

रसोत्पत्तिवर्णनम् ।

हिमालयात्पश्चिमदिग्विभागे
गिरीन्द्रनामा रुचिरोऽस्ति भूधरः ।
तस्मिन् समीपेऽतिसुवृत्तकूपे
साक्षाद्रसेन्द्रो निवसत्ययं हि ॥ १ ॥

कुमारिका रूपगुणेन युक्ता
साऽलङ्कृता वाहवरेऽधिरूढा ।
तत्रागता कूपमवेक्षमाणा
निवर्तिता सा महता जवेन ।
प्रधावितः सूतवरश्चतुर्षु
ककुप्सु भूमौ पतितो हि नूनम् ॥ २ ॥

परितः पर्वतात्सम्यक् क्षेत्रं द्वादशयोजनम् ।
विस्तीर्णं च सुवृत्तं हि सूतकस्य समीरितम् ॥ ३ ॥
तन्मृदः पातने यन्त्रे पातितः खलु रोगहा ।
जायते रुचिरः साक्षादुच्यते पारदः स्वयम् ॥ ४ ॥
कूपाद्विनिसृतः सूतश्चतुर्दिक्षु गतो द्विजः ।
क्षत्रियो वैश्यशूद्रौ च चतुर्धा जायते खलु ॥ ५ ॥
श्वेता कृष्णा तथा पीता रक्ता वै जायते छविः ।
प्राच्यां याम्यां प्रतीच्यां च कौबेर्यां च दिशि क्रमात् ॥ ६ ॥

श्वेतः श्वेतविधाने स्यात्कृष्णो देहकरस्तथा ।
पीतवर्णः स्वर्णकर्ता रक्तो रोगविनाशकृत् ॥ ७ ॥
सर्व एकीकृता एव सर्वकार्यकराः सदा ।
सेविताः सर्वरोगघ्नाः सर्वसिद्धिविधायकाः ॥ ८ ॥
इत्थं सूतोद्भवं ज्ञात्वा न रोगैर्बाध्यते खलु ।
शोधितो मारितश्चैव क्रामितः सारितः शुभः ॥ ९ ॥

अष्टादशरससंस्काराः ।

स्वेदनं मर्दनं चैव मूर्च्छनं स्यात्तदुत्थितम् ।
पातनं रोधनं सम्यक् नियमं च सुदीपनम् ॥ १० ॥
तथाभ्रकग्रासमानं चारणं च क्रमेण हि ।
गर्भद्रुतिर्बाह्यद्रुतिः प्रोक्तं जारणकं तथा ॥ ११ ॥
रञ्जनं सारणं प्रोक्तं क्रामणं वेधकर्म च ॥
सेवनं पारदस्याथ कर्माण्यष्टादशैव हि ॥ १२ ॥
उद्देशतो मयाऽत्रैव नामानि कथितानि वै ।

रसदोषाः ।

दोषाः पञ्च समुद्दिष्टाः पारदानां भिषग्वरैः ॥ १३ ॥
मलो विषं तथा वह्निर्मदो दर्पश्च वै क्रमात् ।
मूर्च्छां मृत्युं मदं चैव स्फोटं कुर्युश्शिरोभ्रमम् ॥ १४ ॥

रसकञ्चुकाः ।

कञ्चुकाः सप्त सूतस्य कथयामि यथार्थतः ।
नामानि कथयाम्येषां देवीशास्त्रानुसारतः ॥ १५ ॥
मृच्छैलजलशुल्बायोनागवङ्गसमुद्भवाः ।
सूतके कञ्चुकाः सप्त ततश्चैव विषोपमाः ॥ १६ ॥

---

१ श्वेतविधाने तारकर्मणि रौप्यकरणे इत्यर्थः । २ 'जारितः' इति पाठान्तरम् । ३ रोधनसंस्कारस्थाने ग्रन्थान्तरेषु बोधनाख्यः संस्कार उक्तः, तदुक्तं,–"एवं कदर्थितः सूतः षण्ढत्वमधिगच्छति । तन्मुक्तयेऽस्य क्रियते बोधनं कथ्यते हि तत्"–इति ।

द्वादशैव हि दोषाः स्युर्यैर्न[1] निष्काशिता द्विजैः।
तेषां न रससिद्धिः स्यादपरे यमसन्निभाः ॥ १७ ॥
तस्माद्दोषापहरणं कर्तव्यं भिषगुत्तमैः।

स्वेदनम्[2]।

तत्र स्वेदनकं कुर्याद्यथावच्च शुभे दिने ॥ १८ ॥
सूतस्य स्वेदनं कार्यं दोलायन्त्रेण वार्तिकैः।
क्षारौ चाम्लेन सहितौ तथा च पटुपञ्चकम् ॥ १९ ॥
त्रिकटु त्रिफला चैव चित्रकेण समन्विता।
पुष्पकासीससौराष्ट्र्यौ सर्वाण्येव तु मर्दयेत् ॥ २० ॥
औषधानि समांशानि रसादष्टमभागतः।
कृत्वाऽन्धमूषां तेषां तु तन्मध्ये पारदं क्षिपेत् ॥ २१ ॥
त्रिगुणेन सुवस्त्रेण भूर्जपत्रेण वेष्टयेत्।
गुणेन काष्ठखण्डे वै बद्ध्वां तु रसपोटलीम् ॥ २२ ॥
लम्बायमानां भाण्डे तु तुषवारिप्रपूरिते।
त्रिदिनं स्वेदयेत्सम्यक् स्वेदनं तदुदीरितम् ॥ २३ ॥

मर्दनम्।

अथ मर्दनकं कर्म येन शुद्धतमो रसः।
प्रजायते विस्तरेण कथयामि यथातथम् ॥ २४ ॥
खल्वे विमर्दयेत्सूतं दिनानि त्रीणि चैव हि।
अथ खल्वप्रमाणं हि वक्ष्यतेऽत्र मयाऽधुना ॥ २५ ॥
कलाङ्गुलस्तदायामश्चोत्सेधोऽपि नवाङ्गुलः।
विस्तरेण[3] तथा कुर्यान्निम्नत्वेन षडङ्गुलम् ॥ २६ ॥

---

१ यैः पारदस्य दोषा न निष्कासितास्ते अपरयमसन्निभाः सन्ति, ते मृत्युरूपेण भूमौ वसन्तीत्यर्थः। २ स्वेदनाद्यष्टादशसंस्काराणां परिभाषा रसरत्नसमुच्चये ( सोमदेवकृतरसेन्द्रचूडामणेरुद्धृता ) द्रष्टव्या। ३ विस्तरेण तथा कुर्यादिति विस्तारोऽपि नवाङ्गुल इत्यर्थः।

द्व्यङ्गुलः कण्ठविस्तारो मध्येऽतिमसृणीकृतः।
अर्धचन्द्राकृतिश्चापि मर्दकोऽत्र दशाङ्गुलः॥ २७॥
सूतः पञ्चपलस्तस्मिन् शोधनीयो भिषग्वरैः।
स्वेदनोद्दिष्टभैषज्यैर्मर्दयेत्काञ्जिकैस्त्र्यहम्॥ २८॥
बहिर्मलविनाशाय रसराजं तु निश्चितम्।
उष्णकाञ्जिकतोयेन क्षालयेत्तदनन्तरम्॥ २९॥

मूर्च्छनम्।

अतः परं प्रवक्ष्यामि पारदस्य तु मूर्च्छनम्।
मूर्च्छनं दोषरहितं सप्तकञ्चुकनाशनम्॥ ३०॥
स्वर्जिका यावशूकश्च तथा च पटुपञ्चकम्।
अम्लौषधानि सर्वाणि सूतेन सह मर्दयेत्॥ ३१॥
खल्वे दिनत्रयं तावद्यावन्नष्टत्वमाप्नुयात्।
स्वरूपस्य विनाशेन मूर्च्छनं तदिहोच्यते॥ ३२॥
निर्मलत्वमवाप्नोति ग्रन्थिभेदश्च जायते।

उत्थापनम्।

अथोत्थापनकं कर्म पारदस्य भिषग्वरैः॥ ३३॥
करणीयं प्रयत्नेन रसशास्त्रस्य वर्त्मना।
दोलायन्त्रे ततः स्वेद्यः पूर्ववद्दिवसत्रयम्॥ ३४॥
सूर्यातपे मर्दितोऽसौ दिनमेकं शिलातले।
उत्थापनं भवेत्सम्यङ्मूर्च्छादोषविनाशनम्॥ ३५॥

पातनभेदाः।

पातनं हि महत्कर्म कथयामि सुविस्तरम्॥ ३६॥
त्रिधा पातनमित्युक्तं रसदोषविनाशनम्।
ऊर्ध्वपातस्त्वधःपातस्तिर्यक्पातः क्रमेण हि॥ ३७॥

ऊर्ध्वपातनम्।

उर्ध्वपातनयन्त्रस्य लक्षणं तदिहोच्यते।
मृण्मयी स्थालिका कार्या चोच्छ्रिता तु षडङ्गुला॥ ३८॥

मुखे सप्ताङ्गुलायामा परितस्त्रिदशाङ्गुला[1] ।
इयन्माना द्वितीया च कर्तव्या स्थालिका शुभा ॥ ३९ ॥
क्षारद्वयं रामठं च तथा हि पटुपञ्चकम् ।
अम्लवर्गेण संयुक्तं सूतकं तैस्तु मर्दयेत् ॥ ४० ॥
लेपयेत्तेन कल्केन अधःस्थां स्थालिकां शुभाम् ।
उपरिस्थामधोवक्त्रां दत्वा संपुटमाचरेत् ॥ ४१ ॥
सभस्मलवणेनैव मुद्रां तत्र प्रकारयेत् ।
चुल्ल्यां स्थालीं निवेश्याथ धान्याग्निं तत्र कारयेत् ॥ ४२ ॥
तस्योपरि जलाधानं[2] चतुर्यामावधिं कुरु ।
स्वाङ्गशीतलतां ज्ञात्वा ऊर्ध्वगं ग्राहयेद्रसम् ॥ ४३ ॥
ऊर्ध्वपातनयन्त्रं हि तदेवं परिकीर्तितम् ।

अधःपातनम् ।

पूर्वोक्तां स्थालिकां सम्यग्विपरीतां तु पङ्किले ॥ ४४ ॥
गर्ते तु स्थापितां भूमौ ज्वालयेन्मूर्ध्नि पावकम् ।
यामत्रितयपर्यन्तमधः पतति पारदः ॥ ४५ ॥
अधःपातनयन्त्रं हि कीर्तितं रसवेदिभिः ।

तिर्यक्पातनम् ।

पूर्वोक्तैरौषधैः सार्धं रसराजं विमर्दयेत् ॥ ४६ ॥
तिर्यग्घटे रसं क्षिप्त्वा तन्मुखे ह्यपरो घटः ।
कनीयानुदरे छिद्रं छिद्रे चायसनालिकाम् ॥ ४७ ॥
नलिकां जलपात्रस्थां कारयेच्च भिषग्वरः ।
अधस्ताद्रसयन्त्रस्य तीव्राग्निं ज्वालयेद्बुधः ॥ ४८ ॥
यामत्रितयपर्यन्तं तिर्यक्पातो[3] भवेद्रसः ।
यन्त्राणां पातनानां च त्रितयं सुकरं खलु ॥ ४९ ॥

---

१ परितस्त्रिदशाङ्गुलेति त्रयोदशाङ्गुलविस्तृतेत्यर्थः । २ जलाधानमिति चतुर्गुणं वस्त्रं जलेनार्द्रीकृत्य यन्त्रोपरि स्थाप्यं, शुष्के च पुनर्जलेनार्द्रीकृत्य पुनः स्थाप्यं, एवं चतुर्यामावधिं कुर्यादित्यर्थः । ३ तिर्यक्पातशब्दवाच्य इत्यर्थः ।

कथितं हि मया सम्यग्रसागमनिदर्शनात् ।

रोधनम् ।

अधुना कथयिष्यामि रसरोधनकर्म च ॥ ५० ॥
यत्कृते चपलत्वं हि रसराजस्य शाम्यति ।
सिन्धूद्भवं दशपलं जलप्रस्थत्रयं तथा ॥ ५१ ॥
धारयेद्घटमध्ये च सूतकं दोषवर्जितम् ।
पिधानेन यथा सम्यक् मुद्रितं मृत्स्नया खलु ॥ ५२ ॥
निर्वाते निर्जने देशे धारयेद्दिवसत्रयम् ।
अनेनैव प्रकारेण रोधनं कुरु वैद्यराट् ॥ ५३ ॥

नियमनम् ।

अतः परं प्रवक्ष्यामि नियमं पारदस्य च ।
जलसैन्धवसंयुक्तो घटस्थो हि रसोत्तमः ॥ ५४ ॥
दिनत्रयं स्वेदितश्च वीर्यवानपि जायते ।

दीपनम् ।

अथेदानीं प्रवक्ष्यामि रसराजस्य दीपनम् ॥ ५५ ॥
बुभुक्षा व्यापकत्वं च येन कृत्वा प्रजायते ।
राजिका लवणोपेता मरिचं शिग्रुटङ्कणे ॥ ५६ ॥
कासीससंयुता काङ्क्षी काञ्जिकेन समन्वितैः ।
दिनानि त्रीणि संस्वेद्य पश्चात्क्षारेण मर्दयेत् ॥ ५७ ॥
अनेनैव प्रकारेण दीपनं जायते ध्रुवम् ।
तीव्रत्वं वेगकारित्वं व्यापकत्वं बुभुक्षुता ॥ ५८ ॥
बलवत्वं विशेषेण कृते सम्यक् प्रजायते ।
मुखोत्पादनकं कर्म प्रकारो दीपनस्य हि ॥ ५९ ॥
कथयामि समासेन यथावद्रससाधनम् ।
अष्टादशांशभागेन कनकेन च सूतकः ॥ ६० ॥
निम्बूरसेन संमर्द्यो वासरैकमतः परम् ।
क्षारैश्च लवणै रम्यैः स्वेदितः काञ्जिकेन हि ॥ ६१ ॥

क्षालिते काञ्जिकेनैव वक्त्रं भोक्तुं प्रजायते।
ताप्यसत्त्वं कलांशेन हेम्ना तद्द्विगुणेन हि ॥ ६२ ॥
तप्तमायसखल्वेन तप्तेनाथ[1] प्रमर्दयेत्।
व्यक्तं हि रसचुक्रेण क्षारेण चणकस्य हि ॥ ६३ ॥
जम्बीरपूरकजलैर्मर्दयेदेकविंशतिम्।
वासरे याममेकं तु प्रत्येकं हि विमर्दयेत् ॥ ६४ ॥
यातुधानमुखं सम्यक् यात्येव हि न संशयः।
द्वितीयो दीपनस्यैवं प्रकारः कथितो मया ॥ ६५ ॥
सूतस्याष्टौ च संस्काराः कथिता देहकर्मणि।
तथा च दश कर्माणि देहलोहकराणि हि ॥ ६६ ॥

अभ्रकग्रासमानम्।

अथेदानीं प्रवक्ष्यामि भक्षणं चाभ्रकस्य हि।
(करोटीविधिना सम्यक्कर्तव्यं लोहसंपुटम् ॥ ६७ ॥)
जलयन्त्रस्य योगेन बिडेन सहितो रसः।
भक्षयत्येव चाभ्रस्य कवलानि न संशयः ॥ ६८ ॥
अतो हि जलयन्त्रस्य[2] लक्षणं कथ्यते मया।
सुवृत्तं लोहपात्रं च जलं तत्राढकत्रयम् ॥ ६९ ॥
तन्मध्ये सुदृढं सम्यक्कर्तव्यं लोहसंपुटम्।
लोहसंपुटमध्ये तु निक्षिप्तं शुद्धपारदम् ॥ ७० ॥
बिडेन[3] सहितं चैव षोडशांशेन यत्नतः।
चतुःषष्ठ्यंशकं चाभ्रसत्वं संपुटके तथा ॥ ७१ ॥

---

१ तप्तखल्वलक्षणमुक्तं रसेन्द्रचिन्तामणौ,–"अजाशकृत्तुषाग्निं च खनयित्वा भुवि क्षिपेत्। तस्योपरि स्थितं खल्वं तप्तखल्वमिति स्मृतम्"–इति। २ एतच्च जलयन्त्रं कच्छपयन्त्रमिति नाम्ना रसेन्द्रचिन्तामण्यादावुक्तम्। ३ बिडलक्षणमुक्तं रसरत्नसमुच्चये,–"क्षारैरम्लैश्च गन्धाद्यैर्मूत्रैश्च पटुभिस्तथा। रसग्रासस्य जीर्णार्थं बिडं तत्परिकीर्तितम्"–इति। कासीसेत्यादिना स्वयमेवाग्रे बिडं वक्ष्यति।

संपुटं मुद्रयेत्पश्चाद्दृढया तोयमृत्स्नया[1] ।
वह्निमृत्तिकया[2] वापि सन्धिरोधं तु कारयेत् ॥ ७२ ॥
चुल्ल्यां निवेश्य तं यन्त्रं जलेनोष्णेन पूरितम् ।
क्रमादग्निः प्रकर्तव्यो दिवसार्धकमेव हि ॥ ७३ ॥
एवं कृते ग्रासमानं भक्षयेन्नात्र संशयः ।
अनेनैव प्रकारेण षड्ग्रासं भक्षयेद्ध्रुवम् ॥ ७४ ॥
भक्षिते चाभ्रसत्वे वै सर्वकार्येषु सिद्धिदः[3] ।
मानं मानविहीनेन कर्तुं केन न शक्यते ॥ ७५ ॥
तस्मान्मानं मया कर्म कथितव्यं यथोदितम् ।
चतुःषष्ठ्यंशतो बीजं[4] पारदान्सुखकारकम् ॥ ७६ ॥
पश्चात् द्वात्रिंशभागेन दातव्यं बीजमुत्तमम् ।
ततः षोडशभागेन बीजस्य कवलं न्यसेत् ॥ ७७ ॥
रसादष्टमभागेन दातव्यं भिषगुत्तमैः ।
चतुर्थेनाथ भागेन ग्रास एवं प्रदीयते ॥ ७८ ॥
तथा च समभागेन ग्रासेनैव च साधयेत् ।
बिडेन षोडशांशेन क्षुधितो जायते रसः ॥ ७९ ॥
यदा जीर्णो भवेद्ग्रासः पातितश्च बिडेन हि ।
कासीससिन्धुलवणसौवर्चलसुराष्ट्रिकाः ॥ ८० ॥

---

१ तोयमृत्तिकालक्षणं रसरत्नसमुच्चये एवं पठ्यते,—"लेहवत्कृतबब्बूलक्काथेन परिमर्दितम् । जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम् ॥ इयं हि जलमृत्प्रोक्ता दुर्भेद्या सलिलैः खलु"—इति । अत्र 'मीनमुद्रया' इति पाठान्तरम् । २ वह्निमृत्तिकालक्षणं रसरत्नसमुच्चये एवं पठ्यते,—"खटिकापटुकिट्टैश्च महिषीदुग्धमर्दितैः । वह्निमृत्स्ना भवेद्घोरवह्नितापसहा खलु ॥ एतया मृत्स्नया रुद्धो न गन्तुं क्षमते रसः"—इति । अत्र 'वज्रमुद्रिकया' इति पाठान्तरम् । ३ अभ्रकजारणप्रयोजनमुक्तं रसहृदयकारैः । यथा,—"मुक्त्वैकमभ्रसत्वं नान्यो रसपक्षकर्तनसमर्थः । तेन निरुद्धप्रसरो नियम्यते बध्यते च सुखम्"—इति । प्रयोजनवशेन रक्ताद्यभ्रग्रहणसंकेतोऽपि रसेन्द्रचिन्तामणावुक्तः; यथा,—"रक्तं पीतं च हेमार्थे कृष्णं हेमशरीरयोः । तारकर्मणि तच्छुक्लं काचकिट्टं सदा त्यजेत्"—इति । ४ बीजमिति शुद्धं सुवर्णादिकमित्यर्थः ।

गन्धकेन समं कृत्वा बिडोऽयं वह्निकृद्भवेत्।

चारणम्[1]।

अथगर्भद्रुतेः कर्म चारणं गुणवर्धनम् ॥ ८१ ॥
कथयामि यथातथ्यं रसराजस्य सिद्धिदम्।
ताप्यसत्वाभ्रसत्वं च घोषाकृष्टं[3] च ताम्रकम् ॥ ८२ ॥
समभागानि सर्वाणि ध्मापयेत्खदिराग्निना।
भस्त्रिकाद्वितयेनैव यावदभ्रकशेषकम् ॥ ८३ ॥
तदभ्रसत्वं सूतस्य चारयेत् समभागिकम्।

गर्भद्रुतिः[2]।

अनेनैव प्रकारेण त्रिगुणं जारणं रसे ॥ ८४ ॥
गर्भद्रुतेर्जारणं हि कथितं भिषगुत्तमैः।

बाह्यद्रुतिः।

बाह्यद्रुति[4]विधानं हि कथ्यते गुरुमार्गतः ॥ ८५ ॥
अभ्रसत्वं हि मूषायां वज्रवल्लीरसेन हि।
सौवर्चलेन संध्मातं रसरूपं प्रजायते ॥ ८६ ॥
अभ्रद्रुतेश्च सूतस्य समांशैर्मेलनं कृतम्।
तेन बन्धत्व[5]मायाति द्रुतिर्बाह्यस्य कथ्यते ॥ ८७ ॥
बाह्यद्रुतिक्रियाकर्म शिवभक्त्या हि सिध्यति।
गुरोः प्रसादात्सततं महाभैरववन्दनात् ॥ ८८ ॥
शिवयोरर्चनादेव सिध्यति बाह्यगा द्रुतिः।

---

१ चारणं नाम अभ्रहेमादीनां रसेऽन्तर्भावः, न रसीभवनम्। २ गर्भद्रुतिर्नाम रसस्य गर्भे अभ्रलोहादिकानां द्रुतिः, रसीभवनम्। उक्तं च,—"रसनात्सर्वधातूनां रस इत्युच्यते बुधैः।" ३ घोषाकृष्टलक्षणमुक्तं रसरत्नसमुच्चये, यथा,—"स्वल्पताल्युतं कांस्यं वक्रनालेन ताडितम्। मुक्तवङ्गं हि तत्ताम्रं घोषाकृष्टमुदाहृतम्"—इति। ४ बाह्यद्रुतिर्नाम जार्यमाणानां अभ्रलोहादिकानां बहिरेव द्रुतिं कृत्वा रसरूपाणां तेषां रसे द्वन्द्वमेलापनम्। ५ बन्धत्वमिति मूर्तिबन्धत्वमित्यर्थः; तल्लक्षणं रसेन्द्रचिन्तामणावुक्तं, यथा,—"साधारणद्रवत्वे सति वह्निनाऽनुच्छिमानत्वं मूर्तिबन्धत्वं"—इति।

जारणम्[1] ।

अथ जारणकं कर्म कथयामि सुविस्तरम् ॥ ८९ ॥
अभ्रकं ताप्यसत्त्वं च समं कृत्वा तु सन्धमेत् ।
अभ्रशेषं कृतं यच्च तत्सत्त्वं जारयेद्रसे ॥ ९० ॥
एवं पूतिद्वयेनैव[2] घनसत्त्वं हि साधयेत् ।
धातुवादविधानेन लोहकृद्देहकृन्न हि ॥ ९१ ॥
गजवङ्गौ महाघोरावसेव्यौ हि निरन्तरम् ।
साधितं घनसत्त्वं तद्रेतितं[3] रजसन्निभम् ॥ ९२ ॥
बुभुक्षितरसस्यास्ये निक्षिप्तं वल्लमात्रकम् ।
रसो[4] गद्याणकस्यापि तुर्यभागः प्रकीर्तितः ॥ ९३ ॥
ताम्रपात्रस्थमम्लं वै सैन्धवेन समन्वितम् ।
क्षीरेण सहितं वाऽपि ग्रहितं त्रिदिनावधि ॥ ९४ ॥
जातं तुत्थसमं नीलं कल्कं तत्प्रोच्यते बुधैः ।
कल्केनानेन सहितं सूतकं च विमर्दयेत् ॥ ९५ ॥
दिनत्रयं तप्तखल्वे धौतः पश्चाच्च काञ्जिकैः ।
स्थापयेत्काचपात्रे तु तदूर्ध्वाधो बिडं न्यसेत् ॥ ९६ ॥
रसस्याष्टमभागेन संपुटं कारयेत्ततः ।
भूर्जपत्रैर्मुखं रुद्ध्वा सूत्रेणैव तु वेष्टयेत् ॥ ९७ ॥
संपुटं वाससा वेष्ट्य दोलायां स्वेदयेत्ततः ।
गोमूत्रेणाम्लवर्गेण काञ्जिकेन दिनं दिनम् ॥ ९८ ॥
अश्मपात्रेऽथ लोहस्य पात्रे काचमयेऽथवा ।
उष्णकाञ्जिकतोयेन क्षालयित्वा रसं ततः ॥ ९९ ॥
दृढे चतुर्गुणे वस्त्रे क्षिप्त्वाऽधः पीडनाद्रसः ।

---

१ "जारणा हि नाम गालनपातनव्यतिरेकेण घनहेमादिग्रासपूर्वकपूर्वावस्थाप्रतिपन्नत्वम्" इति आयुर्वेदप्रकाशः । २ पूतिद्वयेनेति नागवङ्गाभ्यामित्यर्थः । ३ रेतितमिति चूर्णितमित्यर्थः । ४ रसस्य गद्याणचतुर्थे वल्लप्रमितं घनसत्वं देयमित्यर्थः । ५ एतच्च भाषायां 'जंगाल' इति नाम्ना प्रसिद्धम् ।

निपतत्यन्यपात्रे तु सर्वोऽपि यदि पारदः ॥ १०० ॥
तदाऽभ्रं जारितं सम्यग्दण्डधारी भवेद्रसः।
ग्रासमाने पुनर्देयमभ्रबीजमनुत्तमम् ॥ १०१ ॥
अष्टग्रासेन सर्वं हि जारयेद्गुरुमार्गतः।
एवं कृते समं चाभ्रं सूतके जीर्यति ध्रुवम् ॥ १०२ ॥
स्वहस्तेन कृतं सम्यग् जारणं न श्रुतं मया।
समाभ्रे जारिते सम्यग्दण्डधारी भवेद्रसः॥ १०३ ॥
बालश्च कथ्यते सोऽपि किञ्चित्कार्यकरो भवेत्।
द्विगुणे त्रिगुणे चैव कथ्यतेऽत्र मया खलु ॥ १०४ ॥
चतुर्गुणेऽभ्रके जीर्णे किशोरः कथ्यते मया।
जीर्णे पञ्चगुणे चाभ्रे युवा चैव रसोत्तमः ॥ १०५ ॥
षड्गुणे जारिते त्वभ्रे वृद्धश्चैव रसोत्तमः।
सप्ताष्टगुणिते चाभ्रसत्वे जीर्णेऽतिवृद्धकः॥ १०६ ॥
सर्वसिद्धिकरः सोऽपि पारदः पारदः स्वयम्।
अनेनैव प्रकारेण सर्वलोहानि जारयेत् ॥ १०७ ॥

सारणम्।

अथेदानीं प्रवक्ष्यामि वेधवृद्धेश्च कारणम्।
महासिद्धिकरं यत्स्यात्सारणं सर्वकर्मणाम् ॥ १०८ ॥
धूर्तपुष्पसमाकारा मूषाऽष्टाङ्गुलदीर्घिका।
मुखे सुविस्तृता कार्या चतुरङ्गुलसंमिता ॥ १०९ ॥
मृन्मया साऽपि शुष्का च मध्येऽतिमसृणीकृता।
अन्या पिधानिका मूषा सुनिम्ना छिद्रसंयुता ॥ ११० ॥
शुद्धं सुजारितं सूतं मूषामध्ये निधापयेत्।
मत्स्यकच्छपमण्डूकजलौकामेषसूकराः ॥ १११ ॥
एकीकृत्य वसामेषामेवं तैलं तु सारणम्।
भूनागविट् तथा क्षौद्रं वायसानां पुरीषकम् ॥ ११२ ॥
तथैव शलभादीनां महिषीकर्णयोर्मलम्।

रसस्य षोडशांशेन चैतेषां कल्कमादिशेत् ॥ ११३ ॥
पटेन गालितं कृत्वा तैलमध्ये नियोजयेत् ।
सारणार्थे कृतं तैलं तस्मिन् तैले सुपाचयेत् ॥ ११४ ॥
बीजं च कल्कमिश्रं हि कृत्वा मूषोपरि न्यसेत् ।
पिधानेन द्वितीयेन मूषावक्त्रं निरुन्धयेत् ॥ ११५ ॥
भस्मना लवणेनैव मूषायुग्मं तु मुद्रयेत् ।
मूषिकायास्त्रिभागं हि खनित्वा वसुधां क्षिपेत् ॥ ११६ ॥
तदूर्ध्वं ध्मापयेत्सम्यग्दृढाङ्गारैः खराग्निना ।
एवं संजारितं बीजं रसमध्ये पतत्यलम् ॥ ११७ ॥
बन्धमायाति सूतेन्द्रः सारितो गुणवान् भवेत् ।
प्रथमं जारितश्चैवं सारितः सर्वसिद्धिदः ॥ ११८ ॥
नाजारितः सारितश्च कथं बन्धकरो भवेत् ।
गुरूपदेशतो दृष्टं सारणं कर्म चोत्तमम् ॥ ११९ ॥
हस्तानुभवयोगेन कृतं सम्यक् श्रुतं नहि ।

क्रामणम् ।

अथ क्रामणकं कर्म पारदस्य निगद्यते ॥ १२० ॥
शास्त्रात्कृतं न दृष्टं हि यथावत्क्रामयेद्रसम् ।
कर्णमलं महिषीणां स्त्रीदुग्धं टङ्कणेन संमिश्रम् ॥ १२१ ॥
एतान्येव समानि च कृत्वा द्रव्याणि मर्दयेच्च दिनम् ।
विषं च दरदश्चैव रसको रक्तकान्तकौ ॥ १२२ ॥
इन्द्रगोपश्च तुवरी माक्षिकं काकविट् तथा ।
कल्कमेतदधोर्ध्वं हि मध्ये सूतं निधापयेत् ॥ १२३ ॥
काचचूर्णं ततो दत्वा चान्धमूषागतं धमेत् ।
अनेन क्रामणेनैव पारदः क्रमते क्षणात् ॥ १२४ ॥
इदं क्रामणकं श्रेष्ठं नन्दिराजेन भाषितम् ।
ताप्यसत्वं तथा नागं शुद्धं क्रामणकं सदा ॥ १२५ ॥
बीजानि पारदश्चापि क्रमते च न संशयः ।

वेधनम्।

अथ वेधविधानं हि कथयामि सुविस्तरम् ॥ १२६ ॥
येन विज्ञातमात्रेण वेधज्ञो जायते नरः।
धूर्ततैलमहेः फेनं कङ्गुणीतैलमेव च ॥ १२७ ॥
भृङ्गीतैलं विषं चैव तैलं जातीफलोद्भवम्।
हयमारशिफातैलमब्धेः शोषकतैलकम् ॥ १२८ ॥
एतान्यन्यानि तैलानि विद्धि वेधकराणि च।
सिद्धसूतेन च समं मर्दितं वेधकृद्भवेत् ॥ १२९ ॥
लेपवेधस्तथा क्षेपः कुन्तवेधस्तथैव च।
धूमाख्यः शब्दवेधः स्यादेवं पञ्चविधः स्मृतः ॥ १३० ॥
सूक्ष्माणि ताम्रपत्राणि कलधूतभवानि च।
कल्केन लेपितान्येवं ध्मापयेदन्धमूषया ॥ १३१ ॥
शीतीभूते तमुत्तार्य लेपवेधश्च कथ्यते।
द्रुते ताम्रेऽथवा रूप्ये रसं तत्र विनिक्षिपेत् ॥ १३२ ॥
विध्यते तेन सहसा क्षेपवेधः स कथ्यते।
द्रावयेन्नागरूप्यं च ताम्रं चैव तथाऽपरान् ॥ १३३ ॥
पारदोऽन्यतमे पात्रे द्रावितेऽत्र नियोजितः।
वेधते कुन्तवेधः स्यादिति शास्त्रविदब्रवीत् ॥ १३४ ॥
धूमस्पर्शेन जायन्ते धातवो हेमरूप्यकौ।
धूमवेधः स विज्ञेयो रसराजस्य निश्चितम् ॥ १३५ ॥
बद्धे रसवरे साक्षात्स्पर्शनाज्जायते रवः।
तथैव जायते वेधः शब्दवेधः स कथ्यते ॥ १३६ ॥

सेवनविधिः।

अथ सेवनकं कर्म पारदस्य दशाष्टमम्।
कथ्यतेऽत्र प्रयत्नेन विस्तरेण मयाऽधुना ॥ १३७ ॥
यत्नेन सेवितः सूतः शास्त्रमार्गेण सिद्धिदः।
अन्यथा भक्षितश्चैव विषवन्मारयेन्नरम् ॥ १३८ ॥

आदौ तु वमनं कृत्वा पश्चाद्रेचनमाचरेत् ।
ततो मृताभ्रं भक्षेत पश्चात्सूतस्य सेवनम् ॥ १३९ ॥
सम्यक् सूतवरः शुद्धो देहलोहकरः सदा ।
सेवितः सर्वरोगघ्नः सर्वसिद्धिकरो भवेत् ॥ १४० ॥
यावन्मानेन लोहस्य गद्याणे वेधकृद्रसः ।
तावन्मानेन देहस्य भक्षितो रोगहा भवेत् ॥ १४१ ॥
राजिकाऽथ प्रियङ्गुश्च सर्षपो मुद्गमाषकौ ।
रक्तिका चणको वाऽथ वल्लमात्रो भवेद्रसः ॥ १४२ ॥
एषा मात्रा रसे प्रोक्ता रसकर्मविशारदैः ।
अनुपानेन भुञ्जीत पर्णखण्डिकया सह ॥ १४३ ॥
इत्थं संसेविते सूते सर्वरोगाद्विमुच्यते ।
सर्वपापाद्विनिर्मुक्तः प्राप्नोति परमां गतिम् ॥ १४४ ॥

रञ्जनम् ।

अथेदानीं प्रवक्ष्यामि रञ्जनं पारदस्य हि ।
रञ्जितः क्रामितश्चैव साक्षाद्देवो महेश्वरः ॥ १४५ ॥
रञ्जनं लोहताम्राभ्यां रसकेन विधीयते ।
तथा रक्तगणेनैव कर्तव्यं शास्त्रवर्त्मना ॥ १४६ ॥
गन्धरागेण[1] कर्तव्यं पारदस्याथ रञ्जनम् ।
ताम्रेण रक्तकाचेन रक्तसैन्धवकेन च ॥ १४७ ॥
अन्धमूषागतं सूतं रञ्जयेत्ताम्रकादिभिः ।
इष्टिकायन्त्रयोगेन गन्धरागेण रञ्जयेत् ॥१४८॥
रसकस्य च रागेण तुलायन्त्रस्य योगतः ।
मर्दनात्तीक्ष्णचूर्णेन रञ्जयेत्सूतकं सदा ॥ १४९ ॥
ताम्रकल्कीकृतेनैव स्थापयेत्सप्तवासरान् ।
रञ्जनं सूतराजस्य जायते नात्र संशयः ॥ १५० ॥

---

१ गन्धरागेणेति गन्धकस्य रागेणेत्यर्थः । गन्धके रसरञ्जनशक्तिरस्तीति प्रसिद्धम् ।

मृन्मूषा च प्रकर्तव्या रक्तवर्गेण लेपिता।
तन्मध्ये पारदं क्षिप्त्वा ध्मानाद्रञ्जनकं भवेत् ॥ १५१ ॥
मया संक्षेपतः प्रोक्तं रञ्जनं पारदस्य हि।
शास्त्रमार्गेण बहुधा रञ्जनं हि निदर्शितम् ॥ १५२ ॥

इति श्रीपद्मनाभसूनुना श्रीयशोधरेण विरचिते रसप्रकाशसुधाकरेऽष्टादश-रससंस्कारनिरूपणं नाम प्रथमोऽध्यायः।

---

## अथ द्वितीयोऽध्यायः।

अथेदानीं प्रवक्ष्यामि रसराजस्य बन्धनम्।
अनुभूतं मया किञ्चिद्गुरूणां हि प्रसादतः ॥ १ ॥

रसबन्धभेदाः।

बन्धश्चतुर्विधः प्रोक्तो जलौका खोटपाटकौ।
तथा भस्माभिधः साक्षात्कथितोऽपि रसागमे ॥ २ ॥

तेषां सामान्यलक्षणम्।

पक्वबन्धो जलौका[1] स्यात्पिष्टीस्तम्भस्तु खोटकः।
पाटः पर्पटिकाबन्धो भस्म भूतिसमो भवेत् ॥ ३ ॥

रसबन्धनसाधनानि।

मूलिका च मणिश्चैव स्वर्णकं नागवङ्गके।
चत्वार[2] एते सूतस्य बन्धनस्याथ कारणम् ॥ ४ ॥

रसबन्धभेदानामुत्तमादिकत्वम्।

उत्तमो मूलिकाबन्धो मणिबन्धस्तु मध्यमः।

---

१ जलौकाबन्धविषये रसरत्नसमुच्चय एवं पठ्यते,–"केचिद्वदन्ति षड्विंशो जलौकाबन्धसंज्ञकः। स तावन्नेष्यते देहे स्त्रीणां द्रावेऽतिशस्यते–"इति; तथाच,–"बाल्ये चाष्टाङ्गुला योज्या यौवने च षडङ्गुला। द्वादशैव प्रगल्भानां जलौका त्रिविधा मता—"इति। २ नागवङ्गयोरग्निसंपर्कजन्यद्रवत्वादिगुणसाधर्म्यादेकत्वमङ्गीकृत्य चत्वार इति निर्देशः।

अधमो धातुबन्धस्तु पूतिबन्धोऽधमाधमः ॥ ५ ॥
द्रुतिबन्धः पञ्चमोऽसौ देहलोहकरः सदा ।
अभ्रद्रुतिविशेषेण विज्ञेयोऽसौ भिषग्वरैः ॥ ६ ॥

मूलिकाबन्धस्य प्रथमः प्रकारः ।

क्रमप्राप्तमिदं वक्ष्ये मूलिकाबन्धनं रसे ।
शुद्धो राक्षसवक्रश्च रसश्चाभ्रकजारितः ॥ ७ ॥
इङ्गुदीमूलनिर्यासे मर्दितः पारदस्त्र्यहम् ।
तत उद्धृत्य वस्त्रेण बन्धनं कारयेद्बुधः ॥ ८ ॥
काञ्जिके स्वेदनं कुर्यान्नियतं सप्तवासरम् ।
पाचितं चान्नमध्ये तु कर्तव्यं वत्सरावधि ॥ ९ ॥
ततो धूर्तफले न्यस्तं स्वेदयेच्छतसंख्यया ।
पाचितोऽसौ ततस्तैले धूर्ततैलसमायुते ॥ १० ॥
बद्धस्तु तेन विधिना कठिनत्वं प्रजायते ।
वङ्गस्य स्तम्भनं सम्यक्करोत्येव न संशयः ॥ ११ ॥
धारितोऽसौ मुखे साक्षाद्वीर्यस्तम्भकरः सदा ।
मूलिकाबन्धनं ह्येकं कथितं पारदस्य वै ॥ १२ ॥

मूलिकाबन्धस्य द्वितीयः प्रकारः ।

अथापरः प्रकारो हि बन्धनस्यापि पारदे ।
नागार्जुनीमूलरसैर्मर्दयेद्दिनसप्तकम् ॥ १३ ॥
मुखचर्वणसंभूतैर्निम्बकाष्ठेन पेषितः ।
नवनीतसमस्तेन जायते पारदस्ततः ॥ १४ ॥
वस्त्रेण बन्धनं कृत्वा निवेश्य फलधूर्तके ।
गोमयैर्वेष्टितं तच्च करीषाग्नौ विपाचयेत् ॥ १५ ॥

---

१ पूतिबन्धो नागवङ्गबन्ध इत्यर्थः, "पूतिलोहद्वितयमुदितं नागवङ्गाभिधानं" इति रसरत्नसमुच्चयवचनात् । २ राक्षसवक्त्र इति कृतमुखोत्पादनाख्यसंस्कार इत्यर्थः । ३ 'महत्तैले धूर्ततैलनिरंशके' इति पाठान्तरम् । ४ नागार्जुनी दुग्धिका ।

लावकाख्ये पुटे सम्यक् क्रमवृद्ध्या शतं पुटेत्।
मासत्रयप्रमाणेन पाचयेदन्नमध्यतः ॥ १६ ॥
पश्चात्पुटशतं दद्याच्छगणेनाथ पूर्ववत्।
अनेनैव प्रकारेण बध्यते सूतकः सदा ॥ १७ ॥
दृष्टप्रत्यययोगोऽयं कथितः साधकाय वै।
धारितोऽसौ मुखे सम्यग्वीर्यस्तम्भकरः परम् ॥ १८ ॥
वङ्गस्तम्भकरोऽप्येवं बद्धः सूतवरोऽप्यलम्।

मूलिकाबन्धस्य तृतीयः प्रकारः।

शुद्धं सुजारिताभ्रं वै सूतकं च विमर्दयेत् ॥ १९ ॥
अर्कमूलरसेनैव वासरैकं प्रयत्नतः।
वज्रमूषा ततः कार्या सुदृढा मसृणीकृता ॥ २० ॥
अर्कमूलभवेनैव कल्केन परिलेपिता।
मूषामध्ये रसं मुक्त्वा चान्धयेदन्यमूषया ॥ २१ ॥
यामार्धं ध्मापितः सम्यग्रसखोटः प्रजायते।
स्वाङ्गशीतं परिज्ञाय रसखोटं समुद्धरेत् ॥ २२ ॥
वर्षमात्रं धृतो वक्त्रे वलीपलितनाशनः।
सर्वसिद्धिकरोऽप्येष मूलिकाबद्धपारदः ॥ २३ ॥
मूलिकाबन्धनं सत्यं कृतं नागार्जुनादिभिः।
सर्वसिद्धिकरं श्रेष्ठं सर्वकार्यकरं सदा ॥ २४ ॥

मूलिकाबन्धस्य चतुर्थः प्रकारः।

शुद्धं रसवरं सम्यक् तथैवाम्बरभक्षितम्।
जलकुम्भीरसैः पश्चान्मर्दयेद्दिनसप्तकम् ॥ २५ ॥
तस्याः प्रकल्पयेन्मूषां सूतकं तत्र निःक्षिपेत्।
अन्यस्यामन्धमूषायां सूतमूषां निरुन्धयेत् ॥ २६ ॥
पुटं तत्र प्रदातव्यमेकेनारण्यकेन च।
पुटान्येवं प्रदेयानि चोत्पलैकप्रवर्धीनि[1] ॥ २७ ॥

---

[1] उत्पलैकप्रवर्धीनीति उत्पलेनैकैकेन प्रवर्धते इति उत्पलैकप्रवार्धि पुटं; ईदृशानि उत्पलैकप्रवर्धीनि त्रीणि पुटानि देयानीत्यर्थः।

अनेनैव प्रकारेण पुटानि त्रीणि दापयेत् ।
बन्धमाप्नोति सूतेन्द्रः सत्यं गुरुवचो यथा ॥ २८ ॥

मूलिकाबन्धस्य पञ्चमः प्रकारः ।

चूर्णीकृतानि सततं धूर्तबीजानि यत्नतः ।
सूतराजसमान्येवमूर्ध्वयन्त्रेण पातयेत् ॥ २९ ॥
एकविंशतिवाराणि ततः खल्वे निधापयेत् ।
इङ्गुदीपत्रनिर्यासे मर्दयेद्दिनसप्तकम् ॥ ३० ॥
भृङ्गराजरसेनैव विषखर्परकेन च ।
पाठारसेन संमर्द्य लज्जालुस्वरसेन वै ॥ ३१ ॥
त्र्यहं त्र्यहं च संमर्द्य बन्धमायाति निश्चितम् ।
दोलायन्त्रेण संस्वेद्य सप्ताहं धूर्तजे रसे ॥ ३२ ॥
विषमूषोदरे[1] धृत्वा मांसे सूकरसंभवे ।
भर्जयेद्धूर्ततैलेन सप्ताहाज्जायते मुखम् ॥ ३३ ॥
कठिनो वज्रसदृशो जायते नात्र संशयः ।
क्षीरं शोषयते नित्यं कौतुकार्थे न संशयः ॥ ३४ ॥
वीर्यं बद्धं स्तम्भयति सत्यं सत्यं न संशयः ।
प्रकाराः कथिताः पञ्च सूतराजस्य बन्धने ॥ ३५ ॥

मणिबन्धस्य (वज्रबन्धस्य) प्रथमः प्रकारः ।

वज्रबन्धं द्वितीयं तु क्रमेणैव यथातथम् ।
रसशास्त्राणि बहुधा निरीक्ष्य प्रवदाम्यहम् ॥ ३६ ॥
वज्रसत्वं तथा सूतं समांशं कारयेद्बुधः ।
रसपादसमं हेम त्रयमेकत्र मर्दयेत् ॥ ३७ ॥
बन्ध्याकर्कोटिकामूलरसेनैवाऽथ भावयेत् ।
तथा धूर्तरसेनापि चित्रकस्य रसेन वै ॥ ३८ ॥
काम्बोजी[2]रसकेनैव तथा नाडिर[3]सेन वै ।

---

१ विषकृतमूषामध्ये स्थाप्येत्यर्थः । २ काम्बोजी माषपर्णी, गुञ्जा वा ।
३ 'नाहिरसेन' इति पाठान्तरम् ।

आसां नियामिकानां च रसं वस्त्रेण गालयेत् ॥ ३९ ॥
सूर्यातपे दिनैकैकं क्रमेणानेन मर्दयेत् ।
अन्धमूषागतं गोलं मुद्रयेद्दृढमुद्रया ॥ ४० ॥
लोहसंपुटके पश्चान्निक्षिप्तं मुद्रितं दृढम् ।
घटिकाद्वयमानेन ध्मापितं भस्त्रया खलु ॥ ४१ ॥
स्वाङ्गशीतलकं ज्ञात्वा गृह्णीयात्तां च मूषिकाम् ।
उत्खन्योत्खन्य यत्नेन सूतभस्म समाहरेत् ॥ ४२ ॥
काचटङ्कणयोगेन ध्मापितं तं च गोलकम् ।
वेधते शतवेधेन सूतको नात्र संशयः ॥ ४३ ॥
वक्त्रस्थो निधनं हन्याद्देहलोहकरो भवेत् ।

वज्रबन्धस्य द्वितीयः प्रकारः ।

वज्रभस्म तथा सूतं समं कृत्वा तु मर्दयेत् ॥ ४४ ॥
त्रिनेमिकावज्रवल्लीसहदेव्यो[1] रसेन च ।
स्नुहीक्षीरेण सप्ताहं सूर्यघर्मे सुतीव्रके ॥ ४५ ॥
रसगोलं सुवृत्तं तु शुष्कं चैवाथ लेपयेत् ।
काकमाचीरसेनैव लाङ्गलीस्वरसेन हि ॥ ४६ ॥
गोजिह्विकारसेनैव सप्तवारं प्रलेपयेत् ।
वज्रमूषागतं गोलं मुद्रयेद्दृढमुद्रया ॥ ४७ ॥
लोहसंपुटमूषायामन्धितं मध्यसंस्थितम् ।
सप्तमृत्कर्पटैः सम्यग्लेपितं सुदृढं कुरु ॥ ४८ ॥
ध्मापितं दृढमङ्गारैस्तत्रस्थं शीतलीकृतम् ।
भित्वा मूषागतं सूतखोटं नक्षत्रसन्निभम् ॥ ४९ ॥
सर्वकार्यकरं शुभ्रं रञ्जितं वेधकृद्भवेत् ।

अभ्रकद्रुतिबन्धः ।

अभ्रकद्रुतिभिः सार्धं सूतकं च विमर्दयेत् ॥ ५० ॥

---

१ त्रिनेमिकेत्यादि । त्रिनेमिका त्रिधारा या वज्रवल्ली तस्याः सहदेव्याश्च रसेनेत्यर्थः । त्रिनेत्रिकेति पाठान्तरम् । त्रिनेत्रिका वाराहीकन्दवल्लिः ।

समांशेन शिलापृष्ठे यामत्रयमनारतम् ।
कस्तूरीघनसाराभ्यां कृष्णागरुसमन्वितम् ॥ ५१ ॥
शर्करालशुनाभ्यां च रामठेन च संयुतम् ।
पलाशबीजस्य तथा तत्प्रसूनस्य रसेन हि॥ ५२ ॥
तीक्ष्णांशुनापि मृदितं द्रुतिभिः सह सूतकम् ।
मिलत्येव न संदेहः किमन्यैर्बहुभाषितैः ॥ ५३ ॥
ततो गुञ्जारसेनैव श्वेतवृश्चीवकस्य च ।
लाङ्गल्याश्च रसैस्तावद्यावद्भवति बन्धनम् ॥ ५४ ॥
ततः प्रकाशमूषायां पञ्चाङ्गारैर्धमेत्क्षणम् ।
बन्धमायाति वेगेन यथा सूर्योदयेऽम्बुजम् ॥ ५५ ॥
अभ्रद्रुतिसमायोगे रसेन्द्रो बध्यते खलु ।
शिवभक्तो भवेत्साक्षात्सत्यवाक् संजितेन्द्रियः ॥ ५६ ॥
शिवयोर्मेलनं सम्यक् तस्य हस्ते भविष्यति ।
रसागमेषु यत्प्रोक्तं बन्धनं पारदस्य च ॥ ५७ ॥
कथितं तन्मया स्पष्टं नानुभूतं न चेष्टितम् ।

हेमद्रुतिबन्धः ।

अथेदानीं प्रवक्ष्यामि सूतराजस्य बन्धनम् ॥ ५८ ॥
हेमद्रुतिं रसेन्द्रेण मर्दयेत्सप्तवासरान् ।
ज्वालामुखीरसेनैव धौतः पश्चाच्च काञ्जिकैः ॥ ५९ ॥
प्रत्यहं क्षालयेद्रात्रौ रसेनोक्तेन वै दिवा ।
अन्धमूषागतं पश्चान्मृदा कर्पटयोगतः ॥ ६०॥
लेपयेत्सप्तवाराणि भूगर्ते गोलकं न्यसेत् ।
द्वादशाङ्गुलविस्तीर्णं द्वादशाङ्गुलनिम्नकम् ॥ ६१ ॥
खातप्रमाणं कथितं गुरुमार्गेण च स्फुटम् ।

१ श्वेतवृश्चीवकः श्वेतपुनर्नवा । २ प्रत्यहं दिवा उक्तेन रसेन (ज्वालामुखी-रसेन) मर्दयेत्, रात्रौ च काञ्जिकैः क्षालयेदित्याशयः । एवं सप्त वासराणि कुर्यात् । 'ज्वालामुखी' 'भाटजाम्बूल' इति महाराष्ट्रभाषायां प्रसिद्धा ।

तत्रोपरि पुटं देयं गजाह्वं छगणेन च ॥ ६२ ॥
यामद्वादशकेनैव बध्यते पारदः स्वयम् ।
हेमद्रुतौ बद्धरसो देहलोहप्रसाधकः ॥ ६३ ॥
सर्वसिद्धिकरः श्रीमान् जरादारिद्र्यनाशनः ।

वज्रद्रुतिबन्धः ।

वज्राणां ब्रह्मजातीनां द्रुतिर्वल्लप्रमाणिका ॥ ६४ ॥
तोलकं शुद्धसूतं च मर्दयेत्कन्यकारसे ।
तावत्तं मर्दयेत्सम्यग्यावत् पिष्टी प्रजायते ॥ ६५ ॥
कृत्वा मूषां समां शुद्धां दहनोपलनिर्मिताम्[1] ।
तन्मध्ये पिष्टिकां मुक्त्वा पिष्टीमानं विषं त्वहेः ॥ ६६ ॥
पिधानं तादृशं कुर्यान्मुखं तेनाथ रुन्धयेत् ।
कांस्यभाजनमध्ये तु स्थापयेन्मूषिकां शुभाम् ॥ ६७ ॥
भाजनानि च चत्वारि चतुर्दिक्षु गतानि च ।
चित्रं घर्मप्रसंगेन बन्धमायाति पारदः ॥ ६८ ॥
यामात् खरातपे नित्यं शिवेनोक्तमतिस्फुटम् ।
वज्रद्रुतिसमायोगात्सूतं बन्धनकं व्रजेत् ॥ ६९ ॥
सर्वेषां सूतबन्धानां श्रेष्ठं सत्यं सदैव हि ।

धातुबन्धस्य प्रथमः प्रकारः ।

धातुबन्धस्तृतीयोऽसौ स्वहस्तेन कृतो मया ॥ ७० ॥
तदहं कथयिष्यामि साधकार्थे यथातथम् ।
भूर्जवत्सूक्ष्मपत्राणि कारयेत् कनकस्य हि ॥ ७१ ॥
तान्येव कोलमात्राणि पलमात्रं तु सूतकम् ।
मर्दयेन्निम्बूकद्रावैर्दिनमेकमनारतम् ॥ ७२ ॥
ततस्तद्गोलकं कृत्वा खर्परोपरि विन्यसेत् ।
चुल्ल्यामारोपणं कार्यं धान्याम्लेन निषिञ्चयेत् ॥ ७३ ॥
पिष्टिस्तम्भस्तु कर्तव्यो नियतं त्रिदिनावधि ।

---

१ दहनोपलः सूर्यकान्तमणिः ।

ततो धूर्तरसेनैव स्वेदयेत्सप्तवासरान् ॥ ७४ ॥
श्वेता पुनर्नवा चिञ्चा सहदेवी च नीलिका।
तथा धूर्तवधू[1] चैव लाङ्गली सुरदालिका ॥ ७५ ॥
सूतबन्धकराः श्रेष्ठाः प्रोक्ता नागार्जुनादिभिः।
एतेषां स्वरसैः पङ्कैर्लेपयेत्सूतगोलकम् ॥ ७६ ॥
त्रिगुणैर्भूर्जपत्रैस्तु वेष्टयेत्तदनन्तरम्।
वस्त्रेण पोटलीं बद्ध्वा स्वेदयेन्निम्बुकद्रवैः ॥ ७७ ॥
यामत्रयं प्रयत्नेन धौतः पश्चाद्रवां जलैः।
ततो धूर्तफलान्तःस्थं पाचयेद्बहुभिः पुटैः ॥ ७८ ॥
लावकाख्यैः सुमतिमान् शोभनः सूर्यकान्तवत्।
जायते नात्र सन्देहो बद्धः शिवसमो भवेत् ॥ ७९ ॥

धातुबन्धस्य द्वितीयः प्रकारः।

अष्टमांशेन रूप्येन सूतकं हि प्रमर्दयेत्।
चाङ्गेरीस्वरसेनैव पिष्टिकां कारयेद्बुधः ॥ ८० ॥
खोटं बद्ध्वा तु विपचेद्धूर्ततैले त्रिवासरान्।
तथा च कङ्गुणीतैले करवीरजटोद्भवे ॥ ८१ ॥
जातीफलोद्भवेनापि वत्सनागोद्भवेन च।
भृङ्ग्युद्भवेन च तथा समुद्रशोषकस्य वै ॥ ८२ ॥
देवदारुभवेनापि पाचयेन्मतिमान् भिषक्।
पश्चात्सुतीक्ष्णमदिरा दातव्या च तुषाग्निना ॥ ८३ ॥
दिनानि सप्त संख्यानि सुखमुत्पद्यते ध्रुवम्।
शुक्रस्तम्भकरः साक्षात्क्षीरं पिबति नान्यथा ॥ ८४ ॥

धातुबन्धस्य तृतीयः प्रकारः।

लोहपात्रे सुविस्तीर्णे तुत्थकस्यालवालकम्।
कृत्वा सुशोधितं सूतं तस्मिन्निःक्षिप्य मात्रया ॥ ८५ ॥
तुत्थचूर्णेन संछाद्य पूरयेन्निम्बुकद्रवैः।

१ वधूः स्पृक्का, शठिः, सारिवा वा।

पिधानेन मुखं रुद्ध्वा लोहपात्रस्य यत्नतः ॥ ८६ ॥
निवाते निर्जने देशे त्रिदिनं स्थापयेत्ततः।
उष्णकाञ्जिकयोगेन क्षालयेद्बहुशो भिषक् ॥ ८७ ॥
नवनीतसमो वर्णः सूतकस्यापि दृश्यते।
रसखोटं ततो बद्ध्वा स्वेदयेत्काञ्जिकैस्त्र्यहम् ॥ ८८ ॥
अश्मचूर्णस्य[1] कणिकामध्ये खोटं निधाय च।
जलसेकः प्रकर्तव्यः शीतीभूतं समुद्धरेत् ॥ ८९ ॥
अनेनैव प्रकारेण त्रिवारं पाचयेद्ध्रुवम्।
कठिनत्वं प्रयात्येव सत्यं गुरुवचो यथा ॥ ९० ॥
ततो धूर्तफलानां हि सहस्रेणापि पाचयेत्।
सुखमुत्पद्यते सम्यग्वीर्यस्तम्भकरोऽप्यलम् ॥ ९१ ॥

धातुबन्धस्य चतुर्थः प्रकारः (पूतिबन्धः।)

वङ्गतीक्ष्णे समे कृत्वा ध्मापयेद्वज्रमूषया।
वङ्गमुत्तारयेत्सम्यक् तीव्राङ्गारैः प्रयत्नतः ॥ ९२ ॥
अनेनैव प्रकारेण त्रिगुणं वाहयेत्त्रपु।
बीजं शाणप्रमाणं हि सूतं पलमितं भवेत् ॥ ९३ ॥
मर्दयेत्कनकद्रावैर्दिनमेकं विशोषयेत्।
गोलस्य स्वेदनं कार्यमहोभिः सप्तभिस्तथा ॥ ९४ ॥
त्रिफलाक्वाथमध्ये तु त्रियामं स्वेदयेत्सुधीः।
कुमार्याः स्वरसेनैव भृङ्गराजरसेन हि ॥ ९५ ॥
भृङ्गीरसेन च तथा त्रिदिनं स्वेद्यमेव हि।
एकैकेनौषधेनैवं काचकूप्यां निवेशयेत् ॥ ९६ ॥
खटीपटुशिवाभक्तं पिष्ट्वा वक्त्रं निरुन्धयेत्।
खातं त्रिहस्तमात्रं स्याल्लद्दिपूर्णं[2] तु कारयेत् ॥ ९७ ॥
मध्ये तु काचघटिकां सुरापूर्णां निवेशयेत्।
भूमिस्थां मासयुग्मेन पश्चादेनां समुद्धरेत् ॥ ९८ ॥

१ अश्मचूर्णस्य चूर्णाश्मनः सुधाख्यस्य। २ लद्दिपूर्णं अश्वपुरीषपूर्णम्।

बद्धं सूतवरं ग्राह्यं शुभ्रचन्द्रप्रभानिभम् ।
मुखस्थं कुरुते सम्यक्दृढवज्रसमं वपुः ॥ ९९ ॥
कामिनीनां शतं गच्छेद्वलीपलितवर्जितः ।
देवीशास्त्रानुसारेण धातुबद्धरसोऽप्ययम् ॥ १०० ॥
प्रकाशितो मया सम्यङ्नात्र कार्या विचारणा ।

धातुबन्धस्य पञ्चमः प्रकारः ।

रसेन्द्रं कान्तलोहं च तीक्ष्णलोहं तथैव च ॥ १०१ ॥
अभ्रसत्वं तथा ताप्यसत्वं हेमसमन्वितम् ।
समांशानि च सर्वाणि मर्दयेन्निम्बूकद्रवैः ॥ १०२ ॥
निषिञ्चयेद्दिनैकं तु पश्चाद्गोलं तु कारयेत् ।
पक्वमूषा प्रकर्तव्या गोलं गर्भे निवेशयेत् ॥ १०३ ॥
गोजिह्वा काकमाची च निर्गुण्डी दुग्धिका तथा ।
कुमारी मेघनादा च मधुसैन्धवसंयुता ॥ १०४ ॥
एतासां स्वरसेनैव स्वेदयेद्बहुशो भिषक् ।
यावद्दृढत्वमायाति तावत्स्वेद्यं तु गोलकम् ॥ १०५ ॥
वक्त्रे धृतं जरामृत्युं निहन्ति च न संशयः ।
सर्वरोगान्निहन्त्याशु वयः स्तम्भयते ध्रुवम् ॥ १०६ ॥
कर्णे कण्ठे तथा हस्ते धारिते मस्तकेऽपि वा ।
अभिचारादिदोषाश्च न भवन्ति कदाचन ॥ १०७ ॥

अध्यायोपसंहारः ।

चतुर्विधान्येव तु बन्धनानि श्रीसूतराजस्य मयोदितानि ।
कुर्वन्ति ये तत्त्वविदो भिषग्वरा राज्ञां गृहे तेऽपि भवन्ति पूज्याः ॥
इति परमरहस्यं सूतराजस्य चोक्तं
रसनिगममहाब्धेर्लब्धमेतत्सुरत्नम् ।
सकलगुणवरिष्ठा वादिनः कौतुकज्ञा
निजहृदि च सुकण्ठे धारयिष्यन्ति तज्ज्ञाः ॥१०९॥

इति श्रीपद्मनाभसूनुना श्रीयशोधरेण विरचिते रसप्रकाशसुधाकरे चतुर्विधरसबन्धनं नाम द्वितीयोऽध्यायः ।

## अथ तृतीयोऽध्यायः।

रसभस्मभेदाः।

अथ मया रसभस्म निगद्यते सकलसूतसुशास्त्रनियोगतः।
ससितकृष्णसुपीतसुलोहितं भवति वर्णचतुष्टयभूषितम् ॥ १॥

दरदात्पारदाकर्षणविधिः।

दरद[1] अत्र सुरक्तसुशोभितो निखिलनिम्बरसेन विमर्दितः।
नियतयामचतुष्टयमम्लके घनरसे समभागविलोडितः ॥ २ ॥
डमरुकाभिधयन्त्रनिवेशितस्तदनु लोहरजः खटिकासमम्।
सुपयसा लवणेन विमर्दितं कुरु भिषग्वर यन्त्रसुरोधनम् ॥ ३॥
नियतयामचतुष्टयमग्निना मृदु समं रसमत्र विपाचयेत्।
उपरि तत्र जलेन निषिञ्चयेदिति भवेद्दरदाद्रसूतकः ॥ ४ ॥
अखिलशोधवरेण च वै यथा सकलकञ्चुकदोषविवर्जितः।
बहुलदोषहरोऽपि भवेत्तथा भवति शुद्धतमो दरदोद्भवः ॥ ५॥

रसकर्पूरविधिः।

विमलसूतवरो हि पलाष्टकं तदनु धातुखटीपटुकाङ्क्षिकाः।
पृथगिमाश्च चतुष्पलभागिकाः स्फटिकशुद्धपलाष्टसमन्विताः ६
सह जलेन विमर्द्य च यामकं लवणकाम्लजलेन विमिश्रितम्।
उदितधातुगणस्य च मूषिकां कुरु विषं विनिवेशय तत्र वै ॥७॥
डमरुकाभिधयन्त्रवरेण तं द्विदशयाममु[2] पाचय वह्निना।
पवनपित्तकफक्षयकारकः सकलरोगहरः परमः सदा ॥ ८ ॥
गजपतेर्बलवद्बलदो नृणां द्विजपती[3]क्षणवन्नयनप्रदः।
युवतिकामविलासविधायको भवति सूतवरः सुखदः सदा ॥९॥
स घनसाररसः किल कान्तिदस्त्वखिलकुष्ठहरः कथितो मया।

उदयभास्कररसः।

विगतदोषकृतौ रसगन्धकौ तदनु लुङ्गरसेन परिप्लुतौ ॥ १० ॥

---

१ 'दरदहंसविपाकसुशोभितः' इति पाठान्तरम्। २ 'उ' इत्यव्ययं पादपूरणे। ३ द्विजपतिः गृध्रः।

प्रहरयुग्ममितं च शिलातले रविकरेण विमर्द्य विचूर्णितौ ।
रुचिरकाचघटीविनिवेशितौ सिकतयन्त्रवरेण दिनत्रयम् ॥११॥
कुरु भिषग्वर वह्निमधस्ततः स च भवेदरुणः कमलच्छविः ।
उदयभास्करनाम रसो ह्ययं भवति रोगविघातकरः स्वयम् ॥१२॥
मगधजामधुना सह गुञ्जिकात्रयमितश्च सदा परिसेवितः ।
ललितकामविधावभिलाषुकः स्थविरकोऽपि रतौ तरुणायते १३
गदहरो बलदोऽपि हि वर्णदो भवति कर्मविपाकजरोगहा ।
सकलसूतकशास्त्रविमर्शनाद्द्विजवरेण मया प्रकटीकृतः ॥ १४ ॥

रक्तरसः ।

रसविदाऽपि रसः परिशोधितो विगतदोषकृतोऽपि हि गन्धकः ।
विमललोहमये कृतखर्परे ह्यमलसाररजः परिमुच्यताम् ॥ १५ ॥
अतिकृशाग्नियुते द्रवति स्वयं तदनु तत्र रसः परिमुच्यताम् ।
विशदलोहमयेन च दर्विणा विघटयेत्प्रहरत्रयसंमितम् ॥ १६ ॥
तदनु काचघटीं विनिवेश्य वै सिकतयन्त्रवरेण हि पाचितः ।
द्विदशयाममधःकृतवह्निना भवति रक्तरसस्तलभस्मसात् ॥१७॥
गतबलेन नरेण हि सेवितो भवति वाजिकरः सुखदः सदा ।
स च वलीपलितानि च नाशयेच्छतशरत्सु निरायमयकृत्परम् १८

रसमाणिक्यम् ।

विमलनागवरैकविभागिकं हरजभागचतुष्टयमिश्रितम् ।
सततमेव विमर्द्य शिलातले बलिवसां च समां कुरु तद्भिषक् १९॥
दिनमितं सुविमर्द्य च कन्यकास्वरस ऐनकरेऽतिविशोषयेत् ।
तदनु सूतवरस्य तु कज्जलीं रुचिरकाचघटे विनिवेशय ॥२०॥
दिवसयुग्ममधःकृतवह्निना स च भवेदरुणः कमलच्छविः ।
सकलरोगविनाशनवह्निकृद्बलकरः परमोऽपि हि कान्तिकृत् २१

---

१ शुद्धं नागं खर्परे स्थाप्य, वह्नौ विद्राव्य, द्रवीभूते तस्मिन् चतुर्गुणं रसमावाप्य उत्तारयेत् । अनन्तरं संचूर्ण्य समभागेन गन्धकेन सह कज्जली विधेया । अन्यद्विधानं तु स्वर्णवङ्गवज्ज्ञेयम् । २ ऐनकरे इति सूर्यातपे इत्यर्थः ।

नयनरोगविनाशकरो भवेत्सकलकामुकविभ्रमकारकः ।
स खलु कर्मविपाकजरोगहा विशदनागयुतः खलु पारदः ॥२२॥

गन्धकजारणम् ।

मृदुमृदा रचिता मसृणेष्टिका उपरि गर्तवरेण च संयुता ।
रसवरं दशशाणमितं हि तत्सशुकपिच्छवरेण निधापयेत् ॥२३॥
सकलपूर्णकृतं च सुगर्तकं गलितनिम्बुफलोद्भवकेन वै ।
स्थगय तं च पिधानवरेण वै मृदितया सुमृदा परिमुद्रितम् ॥२४॥
तदनु कुक्कुटनामपुटे शृतो ह्युपलकेन वनोद्भवकेन वै ।
विधिविदा भिषजा ह्यमुना कृतो विमलषड्गुणगन्धकमश्नुते ॥२५
स च शरीरकरोऽप्यथ लोहकृत्सकलसिद्धिकरः परमो भवेत् ।
शतगुणं हि यदा परिजीर्यते रसवरः खलु हेमकरो भवेत् ॥२६॥

रसपोटली ।

स शुकपिच्छसमोऽपि हि पारदो भवति खल्वतलेन च कुट्टितः ।
दृढतरामुपकल्पय पर्पटीं वसनबद्धकृतामपि पोटलीम् ॥ २७ ॥
उपरि नागरसेन विलेपितां रविकरेण सदा परिशोषिताम् ।
कनकपत्ररसेन च सप्तधाऽप्यवनिगर्ततले विनिवेशय ॥ २८ ॥
अवनिगर्तमरत्निकमायतं द्विदशमङ्गुलमेव सुनिम्नकम् ।
सिकतया परिपूर्य तदर्धकं तदनु तत्र निवेशय पोटलीम् ॥ २९ ॥
उपरि वालुकया परिपूर्य तच्छगणकैश्च पुटं परिदीयताम् ।
द्विदशयामथाग्निमहो कुरु भवति तेन महारसपोटली ॥३०॥
इति मया कथिता रसपोटली बलकरा सुकरा सुखसिद्धिदा ।

कृष्णभस्म ।

विशदसूतसमोऽपि हि गन्धकस्तदनु खल्वतले सुविमर्दितः ३१
त्रिदिनमेव हि हंसपदीरसे दिनकरस्य करेण सुशोषितः ।
विमललोहमये दृढखर्परे तदनु कज्जलिकां प्रतिमुच्य वै ॥३२॥

---

१ गलितनिम्बूफलोद्भवं यत्कं जलं रस इति यावत् तेनेत्यर्थः ।

करमिता सुकृताऽपि हि चुल्लिका ह्युपरि तत्र निवेश्य च भाजनम् ।
अमललोहमयेन च दर्विणा रसवरं नियतं परिमर्दयेत् ॥ ३३ ॥
तदनु वह्निमधः कुरु वै दृढं सततमेव हि यामचतुष्टयम् ।
सुपच एव रसो जलदोपमो भवति वल्लमितो मधुनायुतः॥३४॥
कवलितः क्षयरोगगणापहो मदनवृद्धिकरः परमो नृणाम् ।
स च वलीपलितानि विनाशयेत्सकलकुष्ठविनाशकरः परम् ३५

शुद्धरसभस्म ।

मृदुमृदा परिकल्पितमूषिकां रसमिताङ्गुलिकां भुवि संन्यसेत् ।
रसवरं विमलं हि शोभितं सशुकपिच्छसमं परिमर्दितम्॥३६॥
रससमानमितघृतमूषया द्वितययुग्मकृतं परिमुद्रितम् ।
कनकमूलरसेन च पाचितं तदनु सप्तदिनं कृशवह्निना ॥ ३७ ॥
रसवरस्य हि विपाचनं यवमितं रसराजमयं तदा ।
दिनमुखं प्रतिहन्ति सुभक्षितं सकलदोषकृतां विकृतिं जयेत् ३८

रसपर्पटी ।

रसवरं पलयुग्ममितं शुभं रुचिरताम्रमयः समभागिकम् ।
बलिवसां च घृतेन विमर्दयेदतिकृशाग्निकृते द्रवति स्वयम् ॥३९॥
तदनु ताम्ररसौ विनिवेश्यतां त्रयमिदं सरसं च विमर्दितम् ।
द्रुतमयं च सदायसभाजने तदनु सूतकृतां वरकज्जलीम् ॥४०॥
विघटयेदथ लोहसुदर्विणा तनुमोचदलोपरि ढाल्यते ॥ ४१ ॥
भवति सारतमा रसपोटली सकलरोगविघातकरी हि सा ।
कुरु समानकटुत्रयसंयुतां मरिचयुग्ममितां सुखदां सदा ॥४२॥

अनुपाने प्रयोक्तव्या त्रिफला क्षौद्रसंयुता ।
पर्पटीं भक्षयेत्प्रातस्तथा त्र्यूषणसंयुताम् ॥ ४३ ॥
सन्निपातहरा सा तु पञ्चकोलेन संयुता ।
भक्षिता मधुना सार्धं सर्वज्वरविनाशिनी ॥ ४४ ॥
कणाक्षौद्रेण सहिता सर्वशोफान्निकृन्तति ।
श्यामात्रिकटुकेनाऽपि वातजां ग्रहणीं जयेत् ॥ ४५ ॥

गुग्गुलुत्रिफलासार्धं वातरक्तं विनाशयेत् ।
वातशूलहरा सम्यग्हिङ्गुपुष्करसंयुता ॥ ४६ ॥
व्योषैर्कन्यारसैर्वाऽपि कफामयविनाशिनी ।
दशमूलशृतेनापि वातज्वरनिबर्हणी ॥ ४७ ॥
बाकुचीबीजकल्केन कण्डुपामे विनाशयेत् ।
आरुष्करेण सहिता सा तु सिध्मविनाशिनी ॥ ४८ ॥
गोमूत्रेणानुपानेन चार्शसां हि विनाशिनी ।
नवमाल्यर्जुनश्चैव चित्रको भृङ्गराजकः ॥ ४९ ॥
शाल्मलीनिम्बपञ्चाङ्गं कल्हारश्च गुडूचिका ।
निर्गुण्डी च समांशानि कारयेद्भिषगुत्तमः ॥ ५० ॥
चूर्णीकृत्य च तत्सर्वं पर्पट्याश्चानुपानकम् ।
अष्टादश च कुष्ठानि निहन्त्येव न संशयः ॥ ५१ ॥
पर्पटीरसराजस्य रोगान् हन्त्यनुपानतः ।
अपथ्यं नैव चाश्नीयाद्दोषदूष्यव्यपेक्षया[1] ॥ ५२ ॥

द्वितीया रसपर्पटी ।

शुद्धं रसं गन्धकमेव शुद्धं पृथक् समांशं कुरु यत्नतस्ततः ।
एरण्डमूलस्य रसेन सूतं तथाऽद्रिकर्ण्या स्वरसेन मर्दयेत् ॥५३॥
तं काकमाच्याः स्वरसेन पिष्ट्वा तथा च तं दाडिमबीजतोयैः ।
क्रमेण सूतं हि दिनैश्चतुर्भिः शुद्धत्वमायाति हि निश्चयेन॥५४॥
ततस्तु गन्धं खलु मार्कवद्रवैर्विभाव्यमानं कुरु लोहपात्रे ।
प्रद्रावयेत्तं बदरस्य चाग्निना प्रढालयेद्भृङ्गरसे त्रिवारम् ॥ ५५ ॥
कार्या ततः कज्जलिका विमर्द्य तां द्रावयेल्लोहमये सुपात्रे ।
प्रढालयेत्तां कदलीदले हि संछाद्य चान्येन दलेन पश्चात् ॥५६॥
तस्यास्त्वधोर्ध्वं प्रददीत गोमयं शीतीकृता गव्यघृतेन भर्जिता।
रोगानशेषान्मलदोषजातान् हिनस्ति चैषा रसपर्पटी हि ॥५७॥

---

[1] दोषापेक्षया यदपथ्यं, दूष्यापेक्षया च यदपथ्यं, तदुभयमपि न सेवेतेत्यर्थः ।

सा जीरकेणैव तु रामठेन वातामशूलं ग्रहणीं सकामलाम्।
गुल्मानि चाष्टावुदराणि हन्यात्संसेविता शुद्धरसस्य पर्पटी ५८॥
मयाऽपि सद्वैद्यहिताय नूनं प्रदर्शिताऽयं खलु रोगनाशिनी।

अन्यच्च सूतभस्म।

सूतं सुशुद्धं लवणैश्चतुर्भिः क्षारैस्त्रिभिश्चापि विमर्दयेच्च॥ ५९॥
संशोर्ष्य पश्चादपि हिङ्गुराजिकाशुण्ठीभिरेभिश्च समं विमर्द्य वै।
रसेन सार्धं हि कुमारिकाया मूषां विदध्याद्रविघर्मशोषिताम् ६०
तस्यां निधायाथ रसस्य गोलकं तं स्वेदितं चाम्लरसेन सम्यक्।
यामाष्टकेनाग्निकृतेन दोलया पश्चाद्रसेनाभिविमर्दितोऽसौ॥६१
भेकपर्ण्युरुबुभृङ्गराजकैः शृङ्गवेरगिरिकर्णिकारसैः।
काकमाचीरसविभक्तिकाजलैर्धूर्तजैरपि जयन्तिकाद्रवैः॥६२॥
सिन्धुवारकरसेन विमर्दितं मसृणखल्वतले त्रिवासरम्।
प्रतिरसं च विशोष्य हि भक्षयेद्गुञ्जिकाद्वयमितं रुजापहम्॥६३
केकिमाहिषवराहपित्तकैः कच्छपस्य च रसेन मर्दितम्।
जायतेऽधिकतरं गुणेन वै सन्निपातभवमूर्च्छनं जयेत्॥ ६४॥
यः श्रीसूतवरस्य सेवनमिदं नित्यं करोतीह वै
दीर्घायुर्धनधान्यधर्मसहितः प्राप्नोति सौख्यं सदा।
लोके कीर्तिपरंपरां वितनुते धर्मे मतिर्जायते
प्रान्ते तस्य परा गतिर्हि नियतं सत्यं शिवेनोदितम्॥६५॥

इति श्रीपद्मनामसूनुना श्रीयशोधरेण विरचिते रसप्रकाशसुधाकरे भस्मसूतकथनं नाम तृतीयोऽध्यायः।

---

## अथ चतुर्थोऽध्यायः।

अथेदानीं प्रवक्ष्यामि धातुशोधनमारणम्।
अनुभूतं मया किंचित् किंचिच्छास्त्रानुसारतः॥ १॥

---

१ 'संशोष्य' इति पाठान्तरम्। २ विभक्तिका आरामशीतला। ३ रसेनेति रसशब्देनात्र पित्तमेव ग्राह्यम्।

अष्टधातुनिरूपणम्।

सुवर्णं रजतं चेति शुद्धलोहमुदीरितम्।
ताम्रं चैवाश्मसारं च नागवङ्गौ तथैव च ॥ २ ॥
पूतिलोहं निगदितं द्वितीयं रसवेदिना।
संमिश्रलोहं त्रितयं सौराष्ट्रीतिवर्तकम् ॥ ३ ॥
एतेऽष्टौ धातवो ज्ञेया लोहान्येवं भवन्ति च।

सुवर्णभेदाः।

सुवर्णं द्विविधं ज्ञेयं रसजं खनिसंभवम् ॥ ४ ॥
अन्ये त्रयः सुवर्णस्य प्रकाराः सन्ति नोदिताः।
रसजं रसवेधेन जायते हेम सुन्दरम् ॥ ५ ॥
तच्चतुर्दशवर्णाढ्यं सर्वकार्यकरं परम्।
पर्वते भूमिदेशेषु खन्यमानेषु कुत्रचित् ॥ ६ ॥
दृश्यते खनिजं प्राज्ञैस्तच्चतुर्दशवर्णकम्।

सुवर्णशोधनम्।

रूप्यादियोगेन यदा मिश्रं स्वर्णं हि जायते ॥ ७ ॥
हेमकार्यं न चेत्तेन तदा शोध्यं भिषग्वरैः।
हीनवर्णस्य हेम्नश्च पत्राण्येव तु कारयेत् ॥ ८ ॥
खटिकापट्टचूर्णं च काञ्जिकेन प्रमर्दयेत्।
पत्राणि लेपयेत्तेन कल्केनाथ प्रयत्नतः ॥ ९ ॥
आरण्योत्पलकैः कार्या कोष्ठिका नातिविस्तृता।
मध्ये तत्संपुटं मुक्त्वा वह्निं प्रज्वालयेत्ततः ॥ १० ॥
एवं पुटत्रयं दत्त्वा शुद्धं हेम समुद्धरेत्।
नतु शुद्धस्य हेम्नश्च शोधनं कारयेद्भिषक् ॥ ११ ॥
अन्येषामेव लोहानां शोधनं कारयेद्भिषक्।

---

१ तथा च रसरत्नसमुच्चये,—"प्राकृतं सहजं वह्निसंभूतं खनिसंभवम्। रसेन्द्रवेधसंजातं स्वर्णं पञ्चविधं स्मृतम्"—इति।

स्वर्णमारणस्य प्रथमः प्रकारः।

ततः स्वर्णभवं पत्रं तापितं हि विनिःक्षिपेत् ॥ १२ ॥
ज्वालामुखीरसे षष्टिपुटैर्भस्मीभवत्यलम्।
गुरुणा कथितं सम्यङ्निरुत्थं जायते ध्रुवम् ॥ १३ ॥
रोगान् हिनस्ति सकलान् नात्र कार्या विचारणा।

स्वर्णमारणस्य द्वितीयः प्रकारः।

हेम्नः पत्राणि सूक्ष्माणि सूचिवेध्यानि कारयेत् ॥ १४ ॥
पूराम्बुभस्मसूतेन लेपयित्वाऽथ शोषयेत्।
संपुटे च ततो रुन्ध्यात्पुटयेद्दशभिः पुटैः।
म्रियते नात्र संदेहो निरुत्थं भस्म जायते ॥ १५ ॥

सुवर्णभस्मनः तृतीयः प्रकारः।

हेम्नः सूक्ष्मदलानि भूर्जसदृशान्यादाय संलेप्य वै
वज्रीदुग्धकहिङ्गुहिङ्गुलसमैरेकत्र पिष्टीकृतैः ॥
सत्यं संपुटके निधाय दशभिश्चैवं पुटैः कुक्कुटैः
पाच्यं हेम च रक्तगैरिकसमं संजायते निश्चितम् ॥ १६ ॥

सुवर्णभस्मनश्चतुर्थः प्रकारः।

लोहपर्पटिकाबद्धं मृतं सूतं समांशकम्।
विद्रुते हेम्नि निक्षिप्तं स्वर्णं भूतिप्रभं भवेत् ॥ १७ ॥
तद्भस्म पूरतोयेन दरदेन समन्वितम्।
मर्दयेद्दिनमेकं तु संपुटे धारयेत्ततः ॥ १८ ॥
पुटितं दशवारेण स्वर्णं सिन्दूरसन्निभम्।
जायते नात्र संदेहो रञ्जनं कुरुते ध्रुवम् ॥ १९ ॥
देहं लोहं च मतिमान् सुधनी साधयेद्ध्रुवम्।

सुवर्णभस्मगुणाः।

एतत्स्वर्णभवं करोति च रजः सौन्दर्यतां वै सदा
रोगान्दैवकृतान्निहन्ति सकलान्येव त्रिदोषोद्भवान्।
यः सेवेत नरः समान् द्विदशकान् वृद्धश्च नो जायते
दोषा नैव गरोद्भवा विषकृता आगन्तुजा चैव हि ॥ २० ॥

रूप्यभेदाः।

रूप्यं च त्रिविधं प्रोक्तं खनिजं सहजं तथा।
कृत्रिमं च त्रयो भेदाः कथिताः पूर्वसूरिभिः॥ २१॥
भूधरे कुत्रचित्प्राप्तं खन्यमाने च खानिजम्।
कैलासशिखराज्जातं सहजं तदुदीरितम्॥ २२॥
रसवेधेन यज्जातं वङ्गात्तत् कृत्रिमं मतम्।

शुद्धरूप्यलक्षणम्।

यद्रूप्यं वह्निना तप्तमुज्ज्वलं हि विनिःसरेत्।
तच्छुद्धं कलधूतं हि सर्वकार्यकरं परम्॥ २३॥

रूप्यशोधनम्।

ताम्रादिसंसर्गभवं त्वशुद्धं रूप्यं हि मिश्रं खलु दोषलं च।
तच्छोधयेद्वै भसितस्य मुष्यां सीसेन सार्धं रजतं तु ध्मापयेत्२४
ताम्राच्च षड्गुणं नागं ध्मापयेद्यत्नतः सुधीः।
शनैर्विधम्यमानं हि दोषशून्यं प्रजायते॥ २५॥
अनेनैव प्रकारेण शोधयेद्रजतं सदा।
सर्वकार्ये प्रयोक्तव्यं सर्वसिद्धिविधायकम्॥ २६॥

रजतमारणम्।

भागमेकं तु रजतं सूतभागचतुष्टयम्।
मर्दयेद्दिनमेकं तु सततं निम्बुवारिणा॥ २७॥
पेषणाज्जायते पिष्टिर्दिनैकेन तु निश्चितम्।
मूषामध्ये तु तां मुक्त्वा ह्यधोर्ध्वे गन्धकं न्यसेत्॥२८॥
वालुकायन्त्रमध्यस्थां दिनैकं तु दृढाग्निना।
पाचितां तु प्रयत्नेन स्वाङ्गशीतलतांगताम्॥ २९॥
तालेनाम्लेन सहितां मर्दितां हि शिलातले।
ततो द्वादश वाराणि पुटान्यत्र प्रदापयेत्॥ ३०॥
अनेन विधिना सम्यग्रजतं म्रियते ध्रुवम्।

रजतमारणस्य द्वितीयः प्रकारः ।

तारमाक्षिकयोश्चूर्णमम्लेन सह मर्दयेत् ॥ ३१ ॥
त्रिंशत्पुटेन तत्तारं भूतीभवति निश्चितम् ।
पुटाधिक्यं हि लोहानां सम्यक् स्याद्गुणकारि च ॥३२॥
रञ्जनं कुरुतेऽत्यर्थं रक्तं श्वेतत्वमादिशेत् ।

रजतभस्मगुणाः ।

शुद्धं भस्मीकृतं रूप्यं सारघा[1]ज्यसमन्वितम् ॥ ३३ ॥
नेत्ररोगानपि सदा क्षयजान् गुदजानपि ।
पित्तजान् काससंभूतान् पाण्डुजानुदराणि च ॥ ३४ ॥
दोषजानपि सर्वांश्च नाशयेदरुचिं सदा ।

ताम्रभेदाः ।

ताम्रं चापि द्विधा प्रोक्तं नेपालं म्लेच्छदेशजम् ॥३५॥
नेपालदेशजादन्यन्म्लेच्छं तत्कथितं बुधैः ।

ताम्रशोधनम् ।

सीसकेन समं ताम्रं रजतेनैव शोधयेत् ॥ ३६ ॥
पश्चान्मारणकं सम्यक्कर्तव्यं रसवादिना ।

ताम्रमारणम् ।

कृत्वा ताम्रस्य पत्राणि कन्यापत्रे निवेशयेत् ॥ ३७ ॥
कुक्कुटाख्ये पुटे सम्यग्पुटयेत्तदनन्तरम् ।
सूतगन्धकयोः पिष्टिः कार्या चातिमनोरमा ॥ ३८ ॥
विमर्द्य निम्बुतोयेन तानि पत्राणि लेपयेत् ।
स्थालीमध्ये निरुन्ध्याथ पचेद्यामचतुष्टयम् ॥ ३९ ॥
पञ्चदोषविनिर्मुक्तं शुल्वं तेनैव जायते ।

ताम्रमारणस्य द्वितीयः प्रकारः ।

रवितुल्येन बलिना सूतकेन समेन च ॥ ४० ॥
तालकेन तदर्धेन शिलया च तदर्धया ।

---

१ सारघं मधु ।

चूर्णं कज्जलसंकाशं कारयेन्मतिमान् भिषक् ॥ ४१ ॥
शरावसंपुटस्यान्तः पत्राण्याधाय यत्नतः ।
उपर्युपरि पत्राणि कज्जलीं च निधापयेत् ॥ ४२ ॥
यामैकं पाचयेदग्नौ गर्भयन्त्रोदरान्तरे ।
स्वाङ्गशीतं समुत्तार्य खल्वे सूक्ष्मं प्रचूर्णयेत् ॥ ४३ ॥
लेहयेन्मधुसंयुक्तमनुपानैर्यथोचितैः ।
वल्लद्वितयमात्रं तु पूर्वाह्णे भिषजाज्ञया ॥ ४४ ॥
परिणामभवं शूलं तथा चाष्टविधं च रुक् ।
उदरं पाण्डुशोफं च गुल्मप्लीहयकृत्क्षयान् ॥ ४५ ॥
अग्निसादक्षयकृतान् मेहादीन् ग्रहणीगदान् ।
जयेद्बहुविधान् रोगाननुपानप्रयोगतः ॥ ४६ ॥

ताम्रमारणस्य तृतीयः प्रकारः ।

शुद्धताम्रस्य पत्राणि कर्तव्यानि प्रयत्नतः ।
तत्समांशस्य गन्धस्य पारदस्य समस्य च ॥ ४७ ॥
तालकस्य तदर्धस्य शिलायाश्च तदर्धतः ।
लाङ्गलीचित्रकव्योषतालमूलीकरञ्जकैः ॥ ४८ ॥
विषशम्याकातिविषासैन्धवैश्च समांशकैः ।
जम्बीरद्रवकेनाथ चूर्णं चातिद्रवीकृतम् ॥ ४९ ॥
तत्सर्वं हि शिलाभाण्डे विनिधाय प्रयत्नतः ।
सूचीवेध्यानि पत्राणि रसेनालेपितानि च ॥ ५० ॥
कल्कमध्ये विनिःक्षिप्य दिनसप्तकमेव हि ।
चूर्णीकृतं तु मध्वाज्यैः कणाद्वयसमन्वितम् ॥ ५१ ॥
लेहितं वल्लमात्रं हि जरामृत्युविनाशनम् ।
कथितं सोमदेवेन सरुजां सुखहेतवे ॥ ५२ ॥

ताम्रमारणस्य चतुर्थः प्रकारः ।

शुद्धं शुल्वं गन्धकं वै समांशं पूर्वं स्थाल्यां स्थापयेद्गन्धकार्धम् ।
मध्ये शुल्वं स्थापनीयं प्रयत्नात्तस्योर्ध्वं वै गन्धचूर्णस्य चार्धम् ५३

स्थालीमुखे चूर्णघटीं निवेश्य लेपं तथा सैन्धवमृत्स्नयाऽपि ।
चुल्ल्यां च कुर्यादथ वह्निमेव यामत्रयेणैव सुपाचितं भवेत् ॥५४॥
शीतीभूतं दोषहीनं तदेव कृत्वा चूर्णं गालितं वस्त्रखण्डे ।
सेव्यं सम्यक् वल्लमेकं प्रमाणं कासं श्वासं हन्ति गुल्मप्रमेहान्॥५५॥
पिप्पलीमधुना सार्धं सर्वदोषहरं परम् ।
दुर्नामग्रहणीरोगान्निहन्ति च रसायनम् ॥ ५६ ॥

लोहभेदाः ।

कान्तं तथा तीक्ष्णवरं हि मुण्डं लोहं भवेद्वै त्रिविधं क्रमेण ।
यथोत्तरं स्याद्गुणवर्णहीनं प्रकाशितं वैद्यवरेण सम्यक् ॥ ५७ ॥

कान्तलोहभेदाः ।

कान्तं चतुर्धा किल कथ्यतेऽत्र तद्रोमकं भ्रामकचुम्बके च ।
संद्रावकं श्रेष्ठतमं तथा हि संकथ्यते शास्त्रविदै रसज्ञैः॥ ५८ ॥

रोमकलक्षणम् ।

खन्यां संखन्यमाने हि पाषाणा निःसरन्ति ये ।
तेभ्यो यद्द्रावितं लोहं रोमकं तत् प्रचक्षते ॥ ५९ ॥

भ्रामकलक्षणम् ।

यत्र क्वापि गिरौ श्रेष्ठे लभ्यते भ्रामकोपलः ।
तस्माज्जातं तु यल्लोहं भ्रामकं तदिहोच्यते ॥ ६० ॥

चुम्बकलक्षणम् ।

विन्ध्याचले भवेदश्मा लोहं चुम्बति चाद्भुतम् ।
न मुञ्चत्येव सततं विष्णुभक्तिं हि वैष्णवः ॥ ६१ ॥

द्रावकलक्षणम् ।

हिमाद्रौ लभ्यते दुःखाद्यः स्पृष्टो द्रावयेदयः ।
सुवर्णादींश्च तद्वद्धि तत्कान्तं द्रावकं भवेत् ॥ ६२ ॥

शुद्धकान्तलोहलक्षणम् ।

शुद्धे कान्तभवे पात्रे शृतं दुग्धं हि नोद्गिरेत् ।
पानीयं क्वथितं चास्मिन् हिङ्गुगन्धसमं भवेत् ॥ ६३ ॥

तैलबिन्दुर्जले क्षिप्तो नचातिप्रसृतो भवेत्।
लेपोऽपि नैव जायेत शुद्धकान्तस्य लक्षणम् ॥ ६४ ॥

मुण्डादीनामुत्तरोत्तरश्रेष्ठत्वम्।

मुण्डाच्छतगुणं तीक्ष्णं तीक्ष्णात्कान्तं महागुणम्।
कोटिसंख्यगुणं प्रोक्तं तस्मात्सेव्यं सदा बुधैः ॥ ६५ ॥

लोहशोधनम्।

शशरक्तेन लिप्तं हि सप्तवारेण तापितम्।
कान्तादिसर्वलोहं हि शुद्ध्यत्येव न संशयः ॥ ६६ ॥
सामुद्रलवणैस्तद्वल्लेपितं त्रिफलाजले।
निर्वापितं भवेच्छुद्धं सत्यं गुरुवचो यथा ॥ ६७ ॥

लोहमारणस्य प्रथमः प्रकारः।

लोहचूर्णं घृताक्तं हि क्षिप्त्वा लोहस्य खर्परे।
अग्निवर्णप्रभं यावत्तावद्दर्व्या प्रचालयेत् ॥ ६८ ॥
खल्वे पिष्ट्वा च विपचेत्पञ्चवारमतः परम्।
वरोदकैः पुटेल्लोहं चतुर्वारमिदं खलु ॥ ६९ ॥
सुपेषितं वारितरं जायते नात्र संशयः।
अनेन विधिना कार्यं सर्वलोहस्य साधनम् ॥ ७० ॥
जायते सर्वरोगघ्नं सेवितं पलितापहम्।

लोहमारणस्य द्वितीयः प्रकारः।

लोहचूर्णं पलद्वन्द्वं गुडगन्धौ समांशकौ ॥ ७१ ॥
खल्वे विमर्द्य नितरां पुटेद्विंशतिवारकम्।
पेषणं तु प्रकर्तव्यं पुटः पश्चात्प्रदीयते ॥ ७२ ॥
अनेन विधिना सम्यग्भस्मीभवति निश्चितम्।
सर्वरोगान्निहन्त्येव नात्र कार्या विचारणा ॥ ७३ ॥
श्वेतापुनर्नवापत्रतोयेन दशसंख्यकाः।
पुटास्तत्र प्रदेयाश्च सिन्दूराभं प्रजायते ॥ ७४ ॥

लोहमारणस्य तृतीयः प्रकारः ।

अथापरः प्रकारोऽत्र कथ्यते लोहमारणे ।
लोहचूर्णसमं गन्धं मर्दयेत्कन्यकारसैः ॥ ७५ ॥
पिण्डीकृतं लोहपात्रे छायायां स्थापयेच्चिरम् ।
म्रियते नात्र सन्देहो ह्यनुभूतं मयैव हि ॥ ७६ ॥

लोहभस्मगुणाः ।

निरुत्थं लोहजं भस्म सेवेतात्र पुमान् सुधीः ।
व्योषवेल्लाज्यमधुना टङ्कमानेन मिश्रितम् ॥ ७७ ॥
जरां च मरणं व्याधिं हन्यात्पुत्रप्रदं सदा ।
गरदोषकृता रोगा न भवन्ति शरीरिणाम् ॥ ७८ ॥

वङ्गभेदाः ।

वङ्गं तु द्विविधं प्रोक्तं खुरं मिश्रं तथैव च ।

खुरवङ्गलक्षणम् ।

यच्छुद्धं सरलं शुभ्रं खुरं तदभिधीयते ॥ ७९ ॥

वङ्गगुणाः ।

वङ्गं वातकरं रूक्षं तिक्तं मेहप्रणाशनम् ।
कृमिमेदामयघ्नं हि कफदोषविषापहम् ॥ ८० ॥

वङ्गशोधनम् ।

भल्लातकभवे तैले खुरं शुद्ध्यति ढालितम् ।
पुनर्नवासिन्धुचूर्णविषयुक्तं प्रढालितम् ॥ ८१ ॥
तक्रमध्ये त्रिवारं हि मिश्रं वङ्गं विशुद्ध्यति ।

वङ्गमारणस्य प्रथमः प्रकारः ।

छाणोपरि कृते गर्ते चिञ्चात्वक्चूर्णकं क्षिपेत् ॥ ८२ ॥

---

१. वङ्गशोधनस्येयं प्रक्रिया—समायां भूमौ त्रितस्तिमात्रं गर्तं कृत्वा, तस्मिन् तावन्मितं लोहमयं पात्रं स्थाप्य, तस्मिन् तैलादिकं द्रवं निधाय, तदुपरि कृतमध्यच्छिद्रां नातिस्थूलां वृत्तां शिलां स्थापयेत् । ततो वङ्गं वह्नौ द्रवीकृत्य, शिलामध्यस्थच्छिद्रद्वारा द्रवे ढालयेत् । अन्यथाऽनावृतपात्रे ढालितो वङ्गस्तस्माद्द्रवादुच्छलन्वैद्यस्य प्राणहानिं कुर्यात्; तस्मादुक्तरीत्यैव वङ्गनागयशदादीनां शोधनं कार्यम् ।

कर्षमानां वङ्गचक्रीं तत्रोपरि निधापयेत् ।
चक्रीं चतुर्गुणेनैव वेष्टितां धारयेत्ततः ॥ ८३ ॥
छगणेन विशुष्केण पुटाग्निं दापयेत्ततः ।
स्वाङ्गशीतं समुद्धृत्य सर्वकार्येषु योजयेत् ॥ ८४ ॥
अनेन विधिना शेषमपकं मारयेद्ध्रुवम् ।

वङ्गमारणस्य द्वितीयः प्रकारः ।

अथापरः प्रकारो हि वक्ष्यते चाधुना मया ॥ ८५ ॥
शुद्धवङ्गस्य पत्राणि समान्येव तु कारयेत् ।
अजाशकृद्वरा तुल्या चूर्णिता च निशा तथा ॥ ८६ ॥
चतुरस्रमथो निम्नं गर्तं हस्तप्रमाणकम् ।
कृत्वा छगणकैश्चार्धं पूरयेत्सततं भिषक् ॥ ८७ ॥
ततः शणभवेनापि वस्त्रेणाच्छाद्य गर्तकम् ।
पूर्वं प्रकल्पितं चूर्णं तत्रोपरि च विन्यसेत् ॥ ८७ ॥
तस्योपरि च पत्राणि समानि परितो न्यसेत् ।
चूर्णेनाच्छाद्य यत्नेन छगणेनाथ पूरयेत् ॥ ८९ ॥
पुटयेदग्निना सम्यक् स्वाङ्गशीतं समुद्धरेत् ।
मृतं वङ्गं ततः पश्चान्मर्दयेत्पूरवारिणा ॥ ९० ॥
समांशं रससिन्दूरमनेन सह मेलयेत् ।
खल्वे दृढतरं पिष्ट्वा काचकूप्यां निवेशयेत् ॥ ९१ ॥
विपचेदग्नियोगेन यामषोडशमात्रया ।
हेमप्रभं मृतं वङ्गं जायते रसवङ्गकम् ॥ ९२ ॥
सर्वरोगान् हरत्याशु शक्तियुक्तं गुणाधिकम् ।
यथारोगबलं वीक्ष्य दातव्यं वल्लमात्रकम् ॥ ९३ ॥
अशीतिर्वातजान् रोगान् तथा मेहांश्च विंशतिः ।
हन्ति भक्षणमात्रेण सप्तकैकेन नान्यथा ॥ ९४ ॥

---

१. चतुर्गुणेन चिञ्चात्वक्चूर्णेन वेष्टितामाच्छादितामित्यर्थः ।

शुद्धनागलक्षणम् ।

छेदे कृष्णं गुरु स्निग्धं द्रुतद्रावमथोज्ज्वलम् ।
कृष्णवर्णं बहिः शुद्धं नागं हितमतोऽन्यथा ॥ ९५ ॥

नागशोधनम् ।

निर्गुण्डिकाहरिद्रयो रसे नागं प्रढालयेत् ।
एवं नागो विशुद्धः स्यान्मूर्च्छास्फोटादि नाचरेत् ॥९६॥

नागमारणस्य प्रथमः प्रकारः ।

शुद्धनागस्य पत्राणि सदलान्येव कारयेत् ।
शिलां वासारसेनापि मर्दयेद्याममात्रकम् ॥ ९७ ॥
पत्राण्यालेपयेत्तेन ततः संपुटके न्यसेत् ।
पुटेन विपचेद्धीमान् वराहेण खराग्निना ॥ ९८ ॥
एवंकृते त्रिरात्रेण नागभस्म प्रजायते ।
जायते सर्वकार्येषु रोगोच्छेदकरं सदा ॥ ९९ ॥
नागस्य मारणं प्रोक्तं बहुधा बहुभिर्बुधैः ।
सर्वथा सूतनागस्य शम्भोश्च मरणं नहि ॥ १०० ॥
प्रमेहान् वातजान् रोगान् धनुर्वातादिकान् गदान् ।
विंशतिः श्लेष्मजांश्चैव निहन्ति च न संशयः ॥ १०१॥

नागमारणस्य द्वितीयः प्रकारः ।

अथापरप्रकारेण नागमारणकं भवेत् ।
लोहपात्रे द्रुते नागे घर्षणं तु प्रकारयेत् ॥ १०२ ॥
चतुर्यामं प्रयत्नेन मूलैश्चैव पलाशजैः ।
अधस्ताज्ज्वालयेत्सम्यग्घठाग्निं म्रियते ध्रुवम् ॥ १०३ ॥
रक्ताभं जायते चूर्णं सर्वकार्येषु योजयेत् ।

पित्तलभेदास्तल्लक्षणं च ।

पित्तलं द्विविधं प्रोक्तं रीतिका काकतुण्डिका ॥ १०४ ॥
तप्ता तुषजले क्षिप्ता शुल्बवर्णा तु रीतिका ।
निक्षिप्ता काञ्जिके कृष्णा काकतुण्डी प्रजायते ॥१०५॥

द्विविधपित्तलगुणाः।

रक्तपित्तहरा रूक्षा कृमिघ्नी रीतिका मता।
काकतुण्डी कुष्ठहरा सोष्णवीर्या सरा मता॥ १०६॥

श्रेष्ठरीतिकालक्षणम्।

पीताभा मृदु चेद्गुर्वी साराङ्गी हेमवर्णिका।
मसृणाङ्गी च सुस्निग्धा शुभा रीतीति कथ्यते॥१०७॥

हीनरीतिकालक्षणम्।

दुर्गन्धा पूतिगन्धा च खरस्पर्शा च पाण्डुरा।
घनघाताक्षमा रूक्षा रीतिर्नेष्टा रसायने॥ १०८॥

रीतिकाशोधनम्।

तापिता चैव निर्गुण्डीरसे क्षिप्ता प्रयत्नतः।
पञ्चवाराणि चायाति शुद्धिं रीतिस्तु तत्क्षणात्॥१०९॥

रीतिकामारणम्।

शिलागन्धकसिन्धूत्थरसैश्चातिप्रमर्दितैः।
रीतिपत्राणि लेप्यानि पुटितान्यष्टधा पुनः॥ ११०॥
सद्यो भस्मत्वमायाति ततो योज्या रसायने।

कांस्यम्।

चतुर्भागेन रविणा भागैकं त्रपुरुत्तमम्॥ १११॥
जायते प्रवरं कांस्यं तत्सौराष्ट्रभवं शुभम्।
शुद्धे कांस्यमये पात्रे सर्वमेव हि भोजनम्॥ ११२॥
पथ्यं संजायते नाम्लं घृतशाकादिवर्जितम्।

कांस्यशोधनम्।

तप्तं कांस्यं गवां मूत्रे सप्तवारेण शुद्ध्यति॥ ११३॥

कांस्यमारणम्।

हरितालकगन्धाभ्यां म्रियते पञ्चभिः पुटैः।

कांस्यभस्मगुणाः।

मृतं कांस्यं वातहरं प्रमेहाणां च नाशनम्॥ ११४॥

वर्तलोहलक्षणम्।

लोहकांस्यार्करीतिभ्यो जातं तद्वर्तलोहकम्।
तदेव विडलोहाख्यं विद्वद्भिः समुदाहृतम्॥ ११५॥

वर्तलोहगुणाः।

श्लेष्मपित्तहरं चाम्लं रुच्यं कृमिहरं तथा।
नेत्ररोगप्रशमनं गलरोगनिबर्हणम्॥ ११६॥
पाच्यं सर्वं हि तद्भाण्डे सर्वदोषहरं परम्।
क्षारेणाम्लेन च विना दीप्तिकृत्पाचनं परम्॥ ११७॥

वर्तलोहशोधनम्।

हयमूत्रे द्रुतं सम्यङ्निक्षिप्तं शुद्धिमृच्छति।

वर्तलोहमारणम्।

गन्धतालेन पुटितं म्रियते वर्तलोहकम्॥ ११८॥

चतुर्थाध्यायोपसंहारः।

संशोधनान्येव हि मारणानि गुणागुणान्येव मयोदितानि।
अन्यानि शास्त्राणि सुविस्तराणि निरीक्ष्य यत्नात्कृतमेव सम्यक्॥

इति श्रीपद्मनाभसूनुना श्रीयशोधरेण विरचिते रसप्रकाशसुधाकरे
धातुशोधनमारणनिरूपणं नाम चतुर्थोऽध्यायः।

---

## अथ पञ्चमोऽध्यायः।

अथेदानीं प्रवक्ष्यामि गुणाधिक्यान्महारसान्।
तेषां नामानि वर्गांश्च सत्वानि तद्गुणांस्तथा॥ १॥

अष्टमहारसाः।

क्रमेण गगनं ताप्यं वैक्रान्तं विमलं तथा।
सस्यकं शैलसंभूतं राजावर्तकमेव हि॥ २॥
एते महारसाश्चाष्टावुदिता रसवादिभिः।

अभ्रकभेदाः।

क्रमप्राप्तमहं वक्ष्ये गगनं तु चतुर्विधम्॥ ३॥

श्वेतं रक्तं तथा पीतं कृष्णं परमसुन्दरम् ।
श्वेतं श्वेतक्रियायोग्यं रक्तपीतं हि पीतकृत् ॥ ४ ॥
कृष्णाभ्रं सर्वरोगाणां नाशनं परमं सदा ।
वज्रं पिनाकं नागं च मण्डूकमभिधीयते ॥ ५ ॥
अनेन विधिना प्रोक्ता भेदाः सन्तीह षोडश ।
अभ्राणामेव सर्वेषां वज्रमेवोत्तमं सदा ॥ ६ ॥
शेषाणि त्रीणि चाभ्राणि घोरान् व्याधीन् सृजन्ति हि ।
तस्माद्यत्नेन सद्वैद्यैर्वर्जनीयानि नित्यशः ॥ ७ ॥

वज्राभ्रलक्षणं गुणाश्च ।

वज्राभ्रं धम्यमानेऽग्नौ विकृतिं न भजेत् कदा ।
सेवितं तन्मृतिं हन्ति वज्राभ्रं कुरुते वपुः ॥ ८ ॥

पिनाकाभ्रलक्षणं गुणाश्च ।

पिनाकं चाग्निसन्तप्तं विमुञ्चति दलोच्चयम् ।
सेवितं चैकमासेन कृमिं कुष्ठं करोत्यलम् ॥ ९ ॥

नागाभ्रलक्षणं गुणाश्च ।

नागाभ्रं ध्मापितं सम्यङ्नागवत्स्फूर्जते ध्रुवम् ।
सेवितं तत्प्रकुरुते क्षयरोगसमुद्भवम् ॥ १० ॥
विषं हालाहलं पीतं मारयत्येव निश्चितम् ।
तथा नागाभ्रनामानं सद्वैद्यः कथयत्यलम् ॥ ११ ॥

मण्डूकाभ्रलक्षणं गुणाश्च ।

मण्डूकाभ्रं प्रकुरुते ताप्यमानं हि नित्यशः ।
क्षणं चाग्नौ न तिष्ठेत मण्डूकसदृशां गतिम् ।
मण्डूकाभ्रं न सेव्यं हि कथितं रसवेदिना ॥ १२ ॥

मृतवज्राभ्रकगुणाः ।

मृतं वज्राभ्रकं सम्यक् सेवनीयं सदा बुधैः ।
वलीपलितनाशाय दृढतायै शरीरिणाम् ॥ १३ ॥

सर्वव्याधिहरं त्रिदोषशमनं वह्नेश्च संदीपनं
वीर्यस्तम्भविवृद्धिकृत्परमिदं कृच्छ्रादिरोगापहम्।
भूतोन्मादनिवारणं स्मृतिकरं शोफामयध्वंसकं
सद्यः प्राणविवर्धनं ज्वरहरं सेव्यं सदा चाभ्रकम्॥ १४॥

सचन्द्रिकाभ्रभक्षणे दोषाः।

यथा विषं यथा वज्रं शस्त्राग्नी प्राणहा यथा।
भक्षितं चन्द्रिकायुक्तमभ्रकं तादृशं गुणैः॥ १५॥

अभ्रकशोधनम्।

स्वेदयेद्दिनमेकं तु काञ्जिकेन तथाभ्रकम्।
पश्चात्कुलत्थजे क्वाथे तक्रे मूत्रेऽथ वह्निना॥ १६॥
पाचितं दोषशून्यं तु शुद्धिमायाति निश्चितम्।
तथाग्नौ परितप्तं तु निषिञ्चेत्सप्तवारकम्॥ १७॥
काञ्जिके चापि निर्दोषमभ्रकं जायते ध्रुवम्।
वराक्वाथे तथा दुग्धे गवां मूत्रे तथैव च॥ १८॥
मार्कवस्य रसेनापि दोषशून्यं प्रजायते।

अभ्रमारणस्य प्रथमः प्रकारः।

सूक्ष्मचूर्णं ततः कृत्वा पिष्ट्वा हंसपदीरसैः॥ १९॥
चक्राकारं कृतं शुष्कं दद्यादर्धगजाह्वये।
षट् पुटानि ततो दत्त्वा पुनरेवं पुनर्नवा-॥ २०॥
रसेन मर्दितं गाढमभ्रांशेन तु टङ्कणम्।
पुनश्च चक्रिकां कृत्वा सप्तवारं पुटेत्खलु॥ २१॥
तण्डुलीयरसेनैव तद्वद्वासारसेन च।
पुटयेत्सप्तवाराणि पुटं दद्याद्गजार्धकम्॥ २२॥
अनेन विधिना चाभ्रं म्रियते नात्र संशयः।
चन्द्रिकारहितं सम्यक् सिन्दूराभं प्रजायते॥ २३॥

अभ्रसत्वपातनम्।

पादांशं टङ्कणं दत्त्वा मुशलीरसमर्दितम्।
ध्मापितं कोष्ठिकायन्त्रे सत्वरूपं प्रजायते॥ २४॥

खल्वे पिष्ट्वा तु मतिमान् सूक्ष्मचूर्णं तु कारयेत्।
गालितं वस्त्रखण्डेन घृतेन च परिप्लुतम् ॥ २५ ॥
भर्जितं दशवाराणि लोहखर्परकेण वै।
अग्निवर्णसमं यावत्तावत्पिष्ट्वा तु भर्जयेत् ॥ २६ ॥
शुकपिच्छसमं पिष्ट्वा क्वाथे तु वटमूलजे।
ततो विंशतिवाराणि पुटेच्छ्रकरसंज्ञिकैः ॥ २७ ॥
वराकषायैर्मतिमान् तथा कुरु भिषग्वरः।
नीलीगुञ्जावरापथ्यामूलकेन सुभावयेत् ॥ २८ ॥
संशुष्कं भक्षयेद्विद्वान् सर्वरोगहरं परम्।
अभ्रसत्वात्परं नास्ति रसायनमनुत्तमम् ॥ २९ ॥
यदि चेच्छतवाराणि पाचयेत्तीव्रवह्निना।
तदाऽमृतोपमं चाभ्रं देहलोहकरं परम् ॥ ३० ॥

अभ्रमारणस्य द्वितीयः प्रकारः।

कासमर्दरसेनैव धान्याभ्रं पाचितं शुभम्।
शतवारेण म्रियते नात्र कार्या विचारणा ॥ ३१ ॥
एवं मुस्तारसेनापि तण्डुलीयशिवारसैः।
टङ्कणेन समं पिष्ट्वा चक्राकारमथाभ्रकम् ॥ ३२ ॥
षष्टिसंख्यपुटैः पक्कं सिन्दूरसदृशं भवेत्।
कुष्ठक्षयादिरोगघ्नमभ्रकं जायते ध्रुवम् ॥ ३३ ॥

अभ्रमारणस्य तृतीयः प्रकारः।

नागवल्लीदलरसैर्वटमूलत्वचा तथा।
वृषामत्स्यादनीभ्यां च मत्स्याक्ष्या सपुनर्भुवा ॥ ३४ ॥
वटवृक्षस्य मूलेन मर्दितं पुटितं घनम्।
सिन्दूरसदृशं वर्णे भवेद्विंशतिमे पुटे ॥ ३५ ॥
सूक्ष्मं रूक्षं जलप्लावं रक्तवर्णसमुद्भवम्।
सर्वरोगहरं चापि जायते बहुभिः पुटैः ॥ ३६ ॥

अभ्रसत्त्वपातनस्यान्यः प्रकारः।

धान्याभ्रकं[1] ततः कृत्वा द्वात्रिंशत्पलमात्रकम्।
लाक्षा गुञ्जा क्षुद्रमीनाष्टङ्कणं दुग्धमाविकम्॥ ३७॥
सर्षपाः शिग्रुपिण्याकं सिन्धूत्थं मृगशृङ्गकम्।
माक्षिकं च समांशानि सर्वाण्येव तु कारयेत्॥ ३८॥
धान्याभ्रकेन तुल्येन मर्दयेन्मतिमान् भिषक्।
पुनर्नवाया वासायाः कासमर्दस्य तन्दुलेः॥ ३९॥
मत्स्याक्ष्या हंसपद्याश्च कारवेल्ल्या रसैः पृथक्।
खलगोधूमयोश्चूर्णैः कारयेद्वटकांश्छुभान्॥ ४०॥
पश्चात्कोष्ठ्यां धमेच्छुष्कान् भस्त्रिकाद्वितयेन तान्।
खदिरस्य तु चाङ्गारैः सत्वं निःसरति ध्रुवम्॥ ४१॥
पृथक्कृत्वा तु रवकान् कांस्यवर्णान् विशेषतः।
तत्किट्टं गोमयेनाथ वटकान् कारयेत्पुनः॥ ४२॥
ध्मापयेत्पूर्वविधिना पुनः सत्वं हि निःसरेत्।
अनेन विधिना कार्यं पञ्चगव्येन मिश्रितम्॥ ४३॥
पञ्चाजेनाथ माहिष्यपञ्चकेन समं कुरु।
पतत्येवमसंदिग्धं सत्यं गुरुवचो यथा॥ ४४॥
अथाभ्रसत्वरवकानम्लवर्गेण पाचयेत्।
शोधनीयगणेनैव मूषामध्ये तु शोधयेत्॥ ४५॥
काचटङ्कणगुञ्जाज्यसारघैः शोधयेत्खलु।
मधुतैलवसाज्येषु दशवाराणि ढालयेत्॥ ४६॥
मार्दवं कारयेत्सत्यं योगेनानेन सर्वदा।
सत्वस्य गोलकानेवं तप्तानेव तु काञ्जिके॥ ४७॥

---

१. अत्र धान्याभ्रकविधानं नोक्तं, अतो रसरत्नसमुच्चयादुद्धृत्य लिख्यते,—"चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके। निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते—" इति।

निर्वाप्य तत्क्षणादेव कण्डयेल्लोहपारया।
अनेनैव प्रकारेण सूक्ष्मचूर्णं तु कारयेत् ॥ ४८ ॥
भर्जयेद्घृतमध्ये तु त्रीणि वाराणि यत्नतः।
पेषणं तु प्रकर्तव्यं शिलापट्टेन यत्नतः ॥ ४९ ॥
धात्रीपत्ररसेनापि तस्याः फलरसेन वा।
पुनर्भवा वासया च काञ्जिकेनाथ गन्धकैः ॥ ५० ॥
पुटयेद्दशवाराणि म्रियते चाभ्रसत्वकम्।

मृताभ्रसत्वगुणाः।

मृतं सत्वं हरेन्मृत्युं सर्वरोगविनाशनम्।
क्षयं पाण्डुं ग्रहणिकां श्वासं शूलं सकामलम् ॥ ५१ ॥
ज्वरान्मेहांश्च कासांश्च गुल्मान् पञ्चविधानपि।
मन्दाग्निमुदराण्येवमर्शांसि विविधानि च ॥ ५२ ॥
अनुपानप्रयोगेण सर्वरोगान्निहन्ति च।
अभ्रसत्वगुणा वक्तुं शक्यते न समाशतैः ॥ ५३ ॥

राजावर्तलक्षणम्।

किञ्चिद्रक्तोऽथ नीलश्च मिश्रवर्णप्रभः सदा।
तौल्ये गुरुश्च मसृणो राजावर्तो वरः स्मृतः ॥ ५४ ॥

राजावर्तगुणाः।

श्लेष्मप्रमेहदुर्नामपाण्डुक्षयनिवारणः।
पाचनो दीपनश्चैव वृष्योऽनिलविषापहः ॥ ५५ ॥

राजावर्तशोधनम्।

गोमूत्रेणाथ क्षारैश्च तथाम्लैः स्वेदिताः खलु।
त्रिवारेण विशुद्ध्यन्ति राजावर्तादयो हि वै ॥ ५६ ॥

राजावर्तमारणम्।

चूर्णितः शुकपिच्छेन भृङ्गराजरसेन वै।
सप्तवारेण पुटितो राजावर्तो मरिष्यति ॥ ५७ ॥

राजावर्तसत्वपातनम्।

कोशातकी क्षीरकन्दो वन्ध्याकर्कोटकी तथा।
काकमाची राजशमी त्रिफला गृहधूमकः ॥ ५८ ॥
राजावर्तो रसैरेषां सत्वं मुञ्चति मर्दितः।
ध्मापितः खदिराङ्गारैर्भस्त्रिकाद्वितयेन वै ॥ ५९ ॥

वैक्रान्तलक्षणम्।

अष्टधारोऽष्टफलकः षट्कोणो मसृणो गुरुः।
शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥ ६० ॥

वैक्रान्तभेदाः।

श्वेतः पीतस्तथा कृष्णो नीलः पारावतच्छविः।
कर्बुरः श्याववर्णश्च वैक्रान्तश्चाष्टधा स्मृतः ॥ ६१ ॥

वैक्रान्तगुणाः।

आयुःप्रदस्त्रिदोषघ्नो वृष्यः प्राणप्रदः सदा।
वेगप्रदो वीर्यकर्ता प्रज्ञावर्णौ करोति हि ॥ ६२ ॥
रसायनेषु सर्वेषु पूर्वगण्यस्तु रोगहा।
वज्रवद्गुणकारी च वैक्रान्तो रसबन्धकः ॥ ६३ ॥

वैक्रान्तशोधनम्।

क्वाथे कुलत्थजे स्विन्नो वैक्रान्तः शुद्ध्यति ध्रुवम्।
गन्धनिम्बुरसैर्मर्द्यः पुटितो म्रियते ध्रुवम् ॥ ६४ ॥

वैक्रान्तसत्वपातनम्।

सूर्यातपे मर्दितोऽसौ सत्वपातगणौषधैः।
शुष्कायितो वटीकृत्वा मूषास्थो ध्मापितोऽपि वै ॥६५॥
सत्वं मुञ्चति वैक्रान्तः सत्यं गुरुवचो यथा।
मृतसूतेन तुल्यांशं सत्वं वैक्रान्तसंभवम् ॥ ६६ ॥
मृताभ्रसत्वसंयुक्तं मर्दितं सममात्रकम्।
कणामध्वाज्यसंमिश्रं वल्लमात्रं निषेवितम् ॥ ६७ ॥
सर्वान् रोगान्निहन्त्याशु जीवेद्वर्षशतं सुखी ॥
वर्षत्रयप्रमाणेन वलीपलितनाशनः ॥ ६८ ॥

सस्यकलक्षणम् ।

सद्यो हालाहलं पीतममृतं गरुडेन च ।
सुधायुक्ते विषे वान्ते पर्वते मरुताह्वये ॥ ६९ ॥
घनीभूतं च संजातं सस्यकं खलु कथ्यते ।
नीलं मरकतच्छायं तेजाढ्यमतिशस्यते ॥ ७० ॥

सस्यकगुणाः ।

विषेण सहितं यस्मात्तस्माद्विषगुणाधिकम् ।
सुधायुक्तं विषं येन सुधाधिकगुणं तथा ॥ ७१ ॥
त्रिदोषशमनं चैव विषहृद्बुदशूलनुत् ।
अम्लपित्तविबन्धघ्नं रसायनवरं सदा ॥ ७२ ॥
वान्तिं करोति वैरेकं श्वित्रकुष्ठापहं तथा ।
नाम्ना मयूरतुत्थं हि सर्वव्याधिनिवारणम् ॥ ७३ ॥

सस्यकशोधनम् ।

स्वेदितं माहिषाजाभ्यां गवां मूत्रैर्नरस्य वा ।
दोलायन्त्रेण यामौ द्वौ शुद्ध्यत्येव हि सस्यकम् ॥ ७४ ॥

सस्यकमारणम् ।

गन्धाश्मटङ्कणाभ्यां च लकुचद्रावमर्दितम् ।
कुक्कुटाद्यैः सप्तपुटैर्म्रियते चान्धमूषया ॥ ७५ ॥

सस्यकसत्वपातनम् ।

निघृष्टं टङ्कणेनैव निम्बूद्रावेण मूषया
ध्मातं च ताम्ररूपं हि सत्त्वं मुञ्चति सस्यकम् ॥ ७६ ॥

सस्यकसत्वमुद्रिका ।

भूनागसत्वसंयुक्तं सत्वमेतत्समीकृतम् ।
अनयोर्मुद्रिका कार्या शूलहा सा भवेत्खलु ॥ ७७ ॥
डाकिनीभूतसंवेशचराचरविषं जयेत् ।
राज्ञां सदैव रक्षार्थं विधातव्या सुमुद्रिका ॥ ७८ ॥

विमलभेदा गुणाश्च ।

प्रथमो हेमविमलो हेमवद्वर्णसंयुतः ।
द्वितीयो रूप्यविमलो रूप्यवदृश्यते खलु ॥ ७९ ॥
तृतीयः कांस्यविमलः कांस्यवर्णसमो हि सः ।
स्निग्धश्च वर्तुलश्चैव षट्कोणः फलकान्वितः ॥ ८० ॥
वृष्यः पित्तानिलहरो रसायनवरः खलु ।

विमलशोधनम् ।

वासारसे मर्दितो हि शुद्धोऽतिविमलो भवेत् ॥ ८१ ॥

विमलमारणम् ।

गन्धाश्मनिम्बुकद्रावैर्मर्दितः पुटितो मृतिम् ।
शृङ्गस्य भस्मना चापि पुटैश्च दशभिः पुटेत् ॥ ८२ ॥

विमलसत्वपातनम् ।

निम्बूरसेन संपिष्ट्वा मूषामध्ये निरुन्ध्य च ।
विमलः सीससदृशं ध्मातो मुञ्चति सत्वकम् ॥ ८३ ॥

विमलसत्वप्रयोगः ।

पिष्टीकृतं हि तत्सत्वं पारदेन समन्वितम् ।
द्रुते गन्धे हि निक्षिप्तं तालकं त्रिगुणं तथा ॥ ८४ ॥
मनःशिला पञ्चगुणा वालुकायन्त्रके खलु ।
ज्वालयेत्क्रमतश्चैव पश्चाद्रजतभस्मकम् ॥ ८५ ॥
सममात्रं हि वैक्रान्तं सर्वं संचूर्णयेत्खलु ।
संगाल्य यत्नतो वस्त्रात्स्थापयेत्कुपिकान्तरे ॥ ८६ ॥
वह्निं कुर्यादष्टयामं स्वाङ्गशीतं समुद्धरेत् ।
वल्लमात्रं च मधुना लेहयेद्व्योषसंयुतम् ॥ ८७ ॥
बालानां रोगहरणं ज्वरपाण्डुप्रमेहनुत् ।
ग्रहणीकामलाशूलमन्दाग्निक्षयपित्तहृत् ॥ ८८ ॥
अनुपानविशेषण सर्वरोगान्निहन्ति वै ।

शिलाजतुभेदास्तल्लक्षणानि च ।

शिलाजतु द्विधा प्रोक्तं गोमूत्रं घनसारकम् ॥ ८९ ॥
तत्राद्यं द्विविधं चैव ससत्वं सत्वहीनकम् ।
गुणाधिकं तयोर्मध्ये यत्पूर्वं सर्वदोषहृत् ॥ ९० ॥
निदाघे तीव्रतापाद्धि हिमप्रत्यन्तपर्वतात् ।
हेमतारार्कगर्भेभ्यः शिलाजतु विनिःसरेत् ॥ ९१ ॥
बन्धूकपुष्पसदृशं गुरु स्निग्धं सुशीतलम् ।
रुक्मगर्भगिरेर्जातं, परमं तद्रसायनम् ॥ ९२ ॥
किंचित्तिक्तं च मधुरं शिलाजं सर्वदोषनुत् ।
तारगर्भगिरेर्जातं पाण्डुरं स्वादु शीतलम् ॥ ९३ ॥
पित्तपाण्डुक्षयघ्नं हि शिलाजतु तु पाण्डुरम् ।
शुल्बगर्भगिरेर्जातं कृष्णवर्णं घनं गुरु ॥ ९४ ॥
गिरिजं कफवातघ्नं विशेषात्सर्वरोगजित् ।

शुद्धशिलाजतुपरीक्षा ।

अग्नौ यज्जायते क्षिप्तं लिङ्गाकारमधूमकम् ॥ ९५ ॥
उदकेन विलीयेत तच्छुद्धं च विधीयते ।

शिलाजतुगुणाः ।

शिलाजतु तु संशुद्धं सेवते यः पुमान् सदा ॥ ९६ ॥
जीवेद्वर्षशतं साग्रं न रोगैर्बाध्यते खलु ।
मूत्रकृच्छ्राश्मरीरोगाः प्रयान्त्येव न संशयः ॥ ९७ ॥
महारसे चोपरसे धातुरत्नेषु पारदे ।
ये गुणाः कथिताः सद्भिः शिलाधातौ भवन्ति ते ॥ ९८

शिलाजतुशोधनम् ।

अम्लैश्च गुग्गुलोपेतैः क्षाराद्यैर्भाण्डमध्यतः ।
विशुद्ध्यति शिलाजातं स्वेदितं घटिकाद्वयम् ॥ ९९ ॥

शिलाजतुमारणम् ।

मनःशिलालुङ्गरसैः शिलया गन्धकेन वा ।
तालकेनाथ पुटितं शिलाजं म्रियते ध्रुवम् ॥ १०० ॥

छगणैरष्टभिः कृत्वा, भस्मीभूतं शिलोद्भवम् ।
वैक्रान्तकान्तत्रिफलात्रिकटुभिः समन्वितम् ॥ १०१ ॥
वल्लोन्मितं वै सेवेत सर्वरोगगणापहम् ।
पलितं वलिभिः सार्धं हन्यादेव न संशयः ॥ १०२ ॥

कर्पूरशिलाजतुलक्षणं गुणाश्च ।

कर्पूरसदृशं श्वेतं कर्पूराख्यं शिलाजतु ।
अश्मरीमेहकृच्छ्रघ्नं कामलापाण्डुनाशनम् ॥ १०३ ॥
अम्लतोयेन संखिन्नं शुष्कं शुद्धिमुपैति च ।
नोदितं मारणं तस्य सत्वपातनकं बुधैः ॥ १०४ ॥

रसकभेदाः ।

द्विविधो रसकः प्रोक्तः कारवेल्लश्च दर्दुरः[1] ।
सत्वपाते परः प्रोक्तः प्रथमश्चौषधादिषु ॥ १०५ ॥
सर्वमेहहरश्चैव पित्तश्लेष्मविनाशनः ।
नागार्जुनेन कथितौ सिद्धौ श्रेष्ठरसावुभौ ॥ १०६ ॥
कृतौ येनाग्निसहनौ सूतखर्परकौ शुभौ ।
तेन स्वर्णमयी सिद्धिरर्जिता नात्र संशयः ॥ १०७ ॥

रसकशोधनम् ।

रसकस्तापितः सम्यङ्निक्षिप्तो रसपूरके ।
निर्मलत्वमवाप्नोति सप्तवारं निमज्जितः ॥ १०८ ॥
काञ्जिके वाऽथ तक्रे वा नृमूत्रे मेषमूत्रके ।
द्रावितो ढालितः सम्यक् खर्परः परिशुद्ध्यति ॥१०९॥
खर्परं रेतितं शुद्धं स्थापितं नरमूत्रके ।
रञ्जयेन्मासमेकं हि ताम्रं स्वर्णप्रभं वरम् ॥ ११० ॥

रसकसत्वपातनम् ।

शिलाहरिद्रात्रिफलागृहधूमैः ससैन्धवैः ।
भल्लातकैष्टङ्कणैश्च क्षारैरम्लैश्च वर्तितम् ॥ १११ ॥

---

१ कारवेल्लकदर्दुरकयोर्लक्षणं रसरत्नसमुच्चय एवं पठ्यते,—'सदलो दर्दुरः प्रोक्तो निर्दलः कारवेल्लकः''–इति ।

पादांशसंयुतैर्मूषां वृन्ताकफलसन्निभाम् ।
निरुध्य शोषयित्वाऽथ मूषां मूषोपरि न्यसेत् ॥११२॥
प्रध्माते खर्परे ज्वाला सिता नीला भवेद्यदा ।
लोहसंदंशके कृत्वा धृत्वा मूषामधोमुखीम् ॥ ११३ ॥
भूम्यामाढालयेत्सत्वं यथा नालं न भज्यते ।
तदा सीसोपमं सत्वं पतत्येव न संशयः ॥ ११४ ॥
अनेनैव प्रकारेण त्रिवारं हि कृते सति ।
विनिःसरेत्सर्वसत्वं सत्यं हि गुरुणोदितम् ॥ ११५ ॥

रसकसत्वप्रयोगः ।

तालकेन समायुक्तं सत्वं निक्षिप्य खर्परे ।
घर्षयेल्लोहदण्डेन म्रियते च न संशयः ॥ ११६ ॥
मृतं सत्वं मृतं कान्तं समांशेनापि योजितम् ।
माषमात्रमितं चूर्णं वराक्काथेन संयुतम् ॥ ११७ ॥
लोहपात्रस्थितं रात्रौ तिलजप्रतिवापकम् ।
निहन्ति मधुमेहं च क्षयं पाण्डुं तथाऽनिलम् ॥११८॥
योनिरोगांश्च नारीणां ज्वरांश्च विषमानपि ।
स्त्रीरोगान् हन्ति सर्वांश्च श्वासकासपुरोगमान् ॥११९॥

माक्षिकभेदाः ।

माक्षिकं द्विविधं ज्ञेयं रुक्मताप्यप्रभेदतः ।
प्रथमं माक्षिकं स्वर्णं कान्यकुब्जसमुत्थितम् ॥ १२० ॥
सुवर्णवर्णसदृशं नववर्णसमन्वितम् ।
तटे तपत्याः संजातं ताप्याख्यं माक्षिकं वदेत् ॥१२१॥
पाषाणदलसंमिश्रं पाण्डुरं पञ्चवर्णवत् ।
गुणाल्पकं भवत्येतत्स्वल्पं सत्वं विमुञ्चति ॥ १२२ ॥

माक्षिकगुणाः ।

सर्वामयघ्नं सततं पारदस्यामृतं परम् ।
मेलनं कुरुते लोहे परमं च रसायनम् ॥ १२३ ॥

माक्षिकशोधनमारणम्।

मूत्रे तक्रे च कौलत्थे मर्दितं शुष्कमेव च।
गन्धाश्मबीजपूराभ्यां पिष्टं तच्छ्रावसंपुटे ॥ १२४ ॥
पञ्चवाराहपुटकैर्दग्धं मृतिमवाप्नुयात्।

माक्षिकसत्वपातनम्।

लोहपात्रे सुसंदिग्धं लोहदण्डेन घर्षितम् ॥ १२५ ॥
यदा रक्तं धातुनिभं जायते निम्बुकद्रवैः।
घर्षयेत्रिगुणं सूतं मुक्त्वा संघर्षणं कुरु ॥ १२६ ॥
दिनैकं घर्षयित्वा तु दृढवस्त्रेण गालयेत्।
वस्त्रस्था पिष्टिका लग्ना त्वधः पतति पारदः ॥ १२७ ॥
अनेनैव प्रकारेण द्वित्रिवारेण गालयेत्।
तत्पिष्टीगोलकं ग्राह्यं यन्त्रे डमरुके न्यसेत् ॥ १२८ ॥
प्रहरद्वयमात्रं चेदग्निं प्रज्वालयेदधः।
इन्द्रगोपसमं सत्वमधःस्थं ग्राहयेत्सुधीः ॥ १२९ ॥
अनेनैव विधानेन ताप्यसत्वं समाहरेत्।
टङ्कणेन समायुक्तं द्रावितं मूषया यदा ॥ १३० ॥
तदा ताम्रप्रभं सत्वं जायते नात्र संशयः।
देहलोहकरं सम्यग्देवीशास्त्रेण भाषितम् ॥ १३१ ॥

इति श्रीपद्मनाभसूनुना श्रीयशोधरेण विरचिते रसप्रकाशसुधाकरे महारसनिरूपणं नाम पञ्चमोऽध्यायः।

---

## अथ षष्ठोऽध्यायः।

अष्टावुपरसाः।

तालकं तुवरी गन्धं कङ्कुष्टं कुनटी तथा।
सौवीरं गैरिकं चैव अष्टमं खेचराह्वयम् ॥ १ ॥

तालकभेदाः।

तालकं द्विविधं प्रोक्तं दलाख्यं चाश्मसंज्ञकम्।
सूक्ष्मपत्रं हेमवर्णं गुरु स्निग्धं च भासुरम् ॥ २ ॥
दलाख्यं तालकं तच्च बहुसत्वं रसायनम्।
निष्पत्रं चाश्मसदृशं किंचित्सत्वं तथाऽगुरु ॥ ३ ॥
नारीणां पुष्पहृत्तत्तु अपथ्यं चाश्मतालकम्।
वातश्लेष्महरं रक्तभूतनुत्पुष्पहृत्स्त्रियाः ॥ ४ ॥
सुस्निग्धमुष्णकटुकं दीपनं कुष्ठहारि तत्।

तालकशोधनम्।

कूष्माण्डतोयसंस्विन्नं ततः क्षारजलेन वा ॥ ५ ॥
चूर्णतोयेन वा स्विन्नं दोलायन्त्रेण शुद्ध्यति।

तालकसत्वपातनम्।

कुलत्थक्राथसौभाग्यमाहिषाज्यमधुप्लुतम्।
खल्वे क्षिप्त्वा च तत्तालं मर्दयेदेकवासरम् ॥ ६ ॥
निस्तुषीकृत्य चैरण्डबीजान्येव तु मर्दयेत्।
पलाष्टमानं तालस्य चाष्टमांशं तु कारयेत् ॥ ७ ॥
बीजान्येरण्डजान्येव क्षिप्त्वा चैकत्र मर्दयेत्।
यवाभा गुटिका कार्या, शुष्कां कूप्यां निधाय च ॥ ८ ॥
वालुकायन्त्रमध्ये तु वह्निं द्वादशयामकम्।
स्वाङ्गशीतं समुत्तार्य ऊर्ध्वगं सत्वमाहरेत् ॥ ९ ॥
पाषाणधातुसत्वानां प्रकाराः सन्ति कोटिशः।
यानि कार्यकराण्येव सत्वानि कथितानि वै ॥ १० ॥

सौराष्ट्रीभेदाः।

सौराष्ट्रदेशे संजाता खनिजा तुवरी मता।
या लेपिता श्वेतवस्त्रे रङ्गबन्धकरी हि सा ॥ ११ ॥
फुल्लिका खटिका तद्वद्द्विप्रकारा प्रशस्यते।
किंचित्पीता च सुस्निग्धा गरदोषविनाशिनी ॥ १२ ॥

श्वेतवर्णाऽपरा साम्ला फुल्लिका लोहमारणी।
कषाया मधुरा काङ्क्षी कटुका विषनाशिनी ॥ १३ ॥
व्रणघ्नी कफहा चैव नेत्रव्याधित्रिदोषहा।
कण्ठरोगहरा सा तु पारदे बीजजारणी ॥ १४ ॥

सौराष्ट्रीशोधनं सत्वपातनं च।

धान्याम्ले तुवरी क्षिप्ता शुद्ध्यति त्रिदिनेन वै।
क्षारैरम्लैश्च मृदिता ध्माता सत्वं विमुञ्चति ॥ १५ ॥
तत्सत्वं धातुवादार्थे, चौषधे नोपपद्यते।

मनःशिलाभेदाः।

मनःशिला त्रिप्रकारा श्यामा रक्ता च खण्डिका ॥१६॥
श्यामा रक्ता मिश्रवर्णा धा(भा)राढ्या श्यामिका भवेत्।
कणवीरा सुरक्ताङ्गी ताम्राभा सैव शस्यते ॥ १७ ॥
चूर्णिता याऽतिरक्ताङ्गी गुरुः स्निग्धा च खण्डिका।
सर्वाः कुनट्यः कथिताः पूर्वं पूर्वं गुणोत्तराः ॥ १८ ॥

मनःशिलागुणाः।

रसायनवरा सर्वा वातश्लेष्मविनाशिनी।
सत्वाधिका विषघ्नी च भूतकण्डूक्षयापहा ॥ १९ ॥
अग्निमान्द्यं प्रशमयेत्कोष्ठरोगनिबर्हिणी।

मनःशिलाशोधनम्।

मुनिपत्ररसेनापि शृङ्गवेररसेन वा।
भाविता सप्तवारेण विशुद्ध्यति न संशयः ॥ २० ॥

मनःशिलासत्वपातनम्।

सर्पिषा च गुडेनाथ किट्टगुग्गुलुनाऽथवा।
शिलाया अष्टमांशेन पिण्डीकृत्वा प्रयत्नतः ॥ २१ ॥
ध्माता तु कोष्ठिकायन्त्रे मुञ्चेत्सत्वं न संशयः ॥ २२ ॥

अञ्जनभेदाः।

सौवीरं च रसाञ्जनं निगदितं श्रोतोञ्जनं चैव हि
तद्वत्पुष्पमथाञ्जनं तदनु चेन्नीलाञ्जनं कथ्यते।

पञ्चानामपि नामवर्णगुणवद्रूपाणि सम्यग्विधौ
कथ्यन्तेऽत्र मयाऽपि शोधनमिदं सत्वं मृतिश्चोच्यते॥२३॥

सौवीराञ्जनम् ।

सौवीराख्यं चाञ्जनं धूमवर्णं पित्तास्रघ्नं छर्दिहिध्माव्रणघ्नम् ।
नेत्रव्याधौ शोधने रोपणे च श्रेष्ठं प्रोक्तं कर्णरोगोपशान्त्यै २४

रसाञ्जनम् ।

पीताभं विषरक्तदोषशमनं सश्वासहिध्मापहं
वर्ण्यं वातविनाशनं क्रमिहरं दार्व्युद्भवं शोभनम् ।

स्रोतोञ्जनम् ।

स्निग्धं स्वादुकषायकं विषवमीपित्तास्रनुल्लेखनं
नेत्र्यं हिध्मरुजापहं निगदितं स्रोतोञ्जनं सर्वदा॥ २५ ॥

पुष्पाञ्जनगुणाः ।

सितं स्निग्धं हिमं चैव नेत्ररोगविषापहम् ।
ज्वरघ्नमतिहिध्माघ्नं पुष्पाञ्जनमिहोदितम् ॥ २६ ॥

नीलाञ्जनगुणाः ।

रसायनं सुवर्णघ्नं गुरु स्निग्धं त्रिदोषहा ।
नीलाञ्जनं च कथितं लोहमार्दवकारकम् ॥ २७ ॥

अञ्जनानां शोधनम् ।

भृङ्गराजरसेनैव सर्वाण्येवाञ्जनानि हि ।
विशुद्ध्यन्तीह सततं सत्यं गुरुवचो यथा ॥ २८ ॥

अञ्जनसत्वपातनम् ।

शिलायाः सत्ववत्सत्वमञ्जनानां च पातयेत् ।

गन्धकभेदाः ।

गन्धकस्य चतुर्भेदाः कथिताः पूर्वसूरिभिः ॥ २९ ॥
श्वेतः पीतस्तथा रक्तः कृष्णश्चेति चतुर्विधः ।
श्वेतस्तु खटिकाकारो लेपनाल्लोहमारणम् ॥ ३० ॥
जायते नात्र संदेहश्चानुभूतं मया खलु ।
पीतवर्णो भवेद्यस्तु स चोक्तोऽमलसारकः ॥ ३१ ॥

रसे रसायने श्रेष्ठः शुकपिच्छः स कथ्यते ।
लाक्षारसनिभो रक्तः शुकतुण्डः स कथ्यते ॥ ३२ ॥
धातूनां रञ्जनं कुर्याद्रसबन्धं करोत्यलम् ।
यः कृष्णवर्णः स तु दुर्लभः स्यान्नाशं करोतीह जरापमृत्योः ।
संसेवनाद्वज्रसमं शरीरं भवेत्सुकान्तं हि निरामयं च ॥ ३३ ॥

गन्धकगुणाः ।

विपाके मधुरो गन्धपाषाणस्तु रसायनः ।
विसर्पकण्डुकुष्ठस्य शमनो दीपनस्तथा ॥ ३४ ॥
आमाजीर्णप्रशमनो विषहा रसशोषणः ।
सूतस्य वीर्यदः साक्षात्पावतीपुष्पसंभवः ॥ ३५ ॥
कृमिरोगहरः सम्यक् सूतं मूर्च्छयति ध्रुवम् ।
सेवितो बलिराज्ञा वै प्रभूतबलहेतवे ॥ ३६ ॥
तस्माद्बलिवसेत्युक्तो गन्धकोऽतिमनोहरः ।

गन्धकशोधनम् ।

घटीमध्ये पयः क्षिप्त्वा मुखे वस्त्रं प्रबन्धयेत् ॥ ३७ ॥
वस्त्रोपरि बलेश्चूर्णं मुखं रुध्वा शरावतः ।
भूमौ निधाय तत्पात्रं पुटं दद्यात्प्रयत्नतः ॥ ३८ ॥
विंशत्युपलकैश्चैव स्वाङ्गशीतं समुद्धरेत् ।
अनेनैव प्रकारेण स्वाङ्गशीतं पुनः पुनः ॥ ३९ ॥
एवं संशोधितो गन्धः सर्वकार्यकरो भवेत् ।

गन्धकतैलपातनम् ।

कलांशव्योषसंयुक्तं शुद्धगन्धकचूर्णकम् ॥ ४० ॥
वस्त्रे वितस्तिमात्रे तु गन्धचूर्णं सतैलकम् ।
विलिप्य वेष्टयित्वा च वर्तिं सूत्रेण वेष्टयेत् ॥ ४१ ॥
धृत्वा संदशतो वर्तिमध्यं प्रज्वालयेच्च ताम् ।
विद्रुतः पतते गन्धो बिन्दुशः काचभाजने ॥ ४२ ॥

तां द्रुतिं प्रक्षिपेत्पत्रे नागवल्ल्यास्त्रिबिन्दुकाम्।
रसं वल्लमितं तत्र दत्त्वाऽङ्गुल्या विमर्दयेत्॥ ४३॥
तत्सर्वं भक्षयेत्पश्चाद्गोदुग्धं चानु संपिबेत्।
कामस्य दीप्तिं कुरुते क्षयपाण्डुविनाशनम्॥ ४४॥
ग्रहणीं नाशयेद्दुष्टां शूलार्तिश्वासकासकम्।
आमाजीर्णं प्रशमयेल्लघुत्वं च प्रजायते॥ ४५॥
गन्धकस्य गुणान् वक्तुं शक्तः कः शम्भुना विना।

गन्धकयोगाः।

शुकपिच्छस्तु मरिचसमांशेन तु कल्पितः॥ ४६॥
त्रिफला षड्गुणा कार्या मर्दयेत्कृतमालजैः।
मूलद्रवैस्ततः पीतो हन्ति कुष्ठान्यनेकशः॥ ४७॥
तन्मूलसलिले घृष्टं वपुस्तेनाथ लेपितम्।
कुष्ठान्येव निहन्त्याशु सद्यः प्रत्ययकारकम्॥ ४८॥
संशुद्धगन्धकं चैव तैलेन सह पेषयेत्।
अपामार्गक्षारतोयैस्तैलेन मरिचेन च॥ ४९॥
विलिप्य सकलं देहं तिष्ठेत्सूर्यातपेषु च।
भोजयेत्तक्रभक्तं च तृतीये प्रहरे खलु॥ ५०॥
वह्निना स्वेदयेद्रात्रौ प्रातरुत्थाय मर्दयेत्।
महिषस्य पुरीषेण स्नायाच्छीतेन वारिणा॥ ५१॥
गन्धतैलं ततोऽभ्यज्य पश्चात्कोष्णेन वारिणा।
स्नानं कुर्यादुषस्येवं कण्डूः पामा च नश्यति॥ ५२॥
दृष्टप्रत्ययोगोऽयं कथितोऽत्र मया खलु।
नाशयेच्चिरकालोत्थाः कुष्ठपामाविचर्चिकाः॥ ५३॥

कङ्कुष्ठवर्णनम्।

पर्वते हिमसमीपवर्तिनि जायतेऽतिरुचिरं कङ्कुष्ठकम्।
एकमेव नलिकाभिधानकं रेणुकं तदनु चापरं भवेत्॥ ५४॥

पीतवर्णमसृणं च वै गुरु स्निग्धमुत्तमतरं प्रचक्षते।
श्यामपीतमतिहीनसत्वकं रेणुकं हि कथितं द्वितीयकम् ॥५५॥
वदन्ति कङ्कुष्टमथापरे हि सद्यः प्रसूतस्य च दन्तिनः शकृत्।
तत्कृष्णपीताभमतीव रेचनं तृतीयमाहुर्विबुधा भिषग्वराः॥५६॥
चतुर्थकङ्कुष्ठमिहैव वाजिनां नालं हि केचित्प्रवदन्ति तज्ज्ञाः।
यद्धस्तिजं श्वेतमथातिपीतं विरेचनं तत्प्रकरोति शीघ्रम् ॥ ५७॥
रसायने श्रेष्ठतरं रसे च सत्वेन युक्तं खलु गौरवान्वितम्।

कङ्कुष्ठगुणाः।

कङ्कुष्ठकं तिक्तकटूष्णवीर्यं विशेषतो रेचनकं करोति ॥ ५८ ॥
गुदार्तिगुल्मव्रणशूलहृत्परं प्रचक्षते शास्त्रविदः पुराणाः।

कङ्कुष्ठशोधनम्।

शुण्ठ्यम्भसा भावितमेव शुद्धिं कङ्कुष्ठमायाति हि सत्यमुक्तम् ५९

कङ्कुष्ठयोगः।

सत्वाकृष्टिर्नच प्रोक्ता यस्मात्सत्वमयं हि तत्।
यवमात्रं भजेदेनं विरेकार्थं न संशयः॥ ६० ॥
क्षणादामज्वरं हन्ति जाते सति विरेचने।
ताम्बूलेन समं चैवं भक्षितं सारयेद्ध्रुवम् ॥ ६१ ॥
बब्बूलमूलिकाक्वाथं सौभाग्याजाजीसंयुतम्।
भूयो भूयः पिबेद्धिमान् विषं कङ्कुष्ठजं जयेत् ॥ ६२ ॥

कासीसभेदास्तद्गुणाश्च।

कासीसं प्रथमं हि सैकतमिदं पुष्पाख्यमन्यत्तथा
क्षाराम्लं गुरु धूम्रवर्णविषहृद्वीर्योष्णकं रागदम्।
श्वित्रघ्नं मुखकेशरञ्जनकरं तत्सैकतं पूर्वकं
पुष्पाख्यं ह्यपरं गुणैश्च सहितं सेव्यं सदा रोगहृत् ॥६३॥
पुष्पाभिधं च कासीसं प्रसिद्धं नेत्ररोगहा।
सोष्णवीर्यं कषायाम्लं विषघ्नं श्लेष्मनाशनम् ॥ ६४ ॥

व्रणहृत्क्षयरोगघ्नं पटरञ्जनकं परम् ।

कासीसशोधनम् ।

भृङ्गराजरसे स्विन्नं निर्मलं हि प्रजायते ॥ ६५ ॥

कासीससत्वपातनम् ।

सौराष्ट्रीसत्ववत्सत्वमेतस्यापि समाहरेत् ।

कासीसयोगः ।

कासीसं भस्म कान्तस्य चोभयं समभागिकम् ॥ ६६ ॥
वराविडङ्गसंयुक्तं घृतक्षौद्रप्लुतं प्रगे ।
भक्षितं हन्ति वेगेन पाण्डुं यक्ष्माणमेव च ॥ ६७ ॥
प्लीहं गुल्मं गुदे शूलं मूत्रकृच्छ्राण्यशेषतः ।
सेवितं सर्वरोगघ्नं रसायनविधानतः ॥ ६८ ॥
अग्निसंधुक्षणं कुर्याद्वलीपलितनाशनम् ।
आमाजीर्णभवान् रोगान् निहन्त्येव न संशयः ॥ ६९ ॥

नवसारगुणाः ।

उद्दिष्टं नवसाराख्यं लवणं चुल्लिकाभिधम् ।
लोहद्रावणकं प्रोक्तं रसजारणकं तथा ॥ ७० ॥
वह्निं च दीपयत्याशु गुल्मप्लीहामयापहम् ।
मांसादिजारणं सम्यग्भुक्तपाकं करोति तत् ॥ ७१ ॥

बिडगुणाः ।

बिडं हि कथ्यते तद्वत्सर्वदोषहरं परम् ।

वराटिकालक्षणम् ।

पीता वराटिका प्रोक्ता सार्धनिष्कप्रमाणिका ॥ ७२ ॥
श्रेष्ठा सैव बुधैः प्रोक्ता टङ्कभारा हि मध्यमा ।
पादोनटङ्कभारा च कथ्यते सा कनिष्ठिका ॥ ७३ ॥

वराटिकागुणाः ।

रसे रसायने प्रोक्ता परिणामादिशूलनुत् ।
ग्रहणीक्षयरोगघ्नी वीर्योष्णा दीपनी मता ॥ ७४ ॥

वृष्या दोषहरी नेत्र्या कफवातविनाशिनी ।
रसेन्द्रजारणे शस्ता बिडमध्ये सदा हिता ॥ ७५ ॥
स्थूला वराटिका प्रोक्ता गुरुश्च श्लेष्मपित्तला ।

वराटिकाशोधनम् ।

स्वेदिता ह्यारनालेन यामाच्छुद्धिमवाप्नुयात् ॥ ७६ ॥

अग्निजारलक्षणम् ।

समुद्रेणाग्निनक्रस्य जरायुर्बहिरुज्झितः ।
रवितापेन संशुष्कः सोऽग्निजार इति स्मृतः ॥ ७७ ॥

अग्निजारगुणाः ।

त्रिदोषशमनो ग्राही धनुर्वातहरः परः ।
वर्धनो रसवीर्यस्य जारणः परमः स्मृतः ॥ ७८ ॥

गिरिसिन्दूरलक्षणम् ।

महागिरौ शिलान्तःस्थो रक्तवर्णश्च्युतो रसः ।
सूर्यातपेन संशुष्को गिरिसिन्दूरसंज्ञिकः ॥ ७९ ॥

गिरिसिन्दूरगुणाः ।

रसबन्धकरं भेदि त्रिदोशमनं तथा ।
देहलोहकरं नेत्र्यं गिरिसिन्दूरमीरितम् ॥ ८० ॥

दरदभेदा गुणाश्च ।

दरदः शुकतुण्डाख्यो हंसपादस्तथाऽपरः ।
चर्मारः प्रथमः प्रोक्तो हीनसत्वः स उच्यते ॥ ८१ ॥
प्रवालाभः शलाकाढ्य उत्तमो हंसपादकः ।
दीपनः सर्वदोषघ्नो हिङ्गुलोऽतिरसायनः ॥ ८२ ॥
सर्वरोगहरः साक्षाद्द्रावणे संप्रशस्यते ।
यथा षड्गुणगन्धेन जारितो रसराजकः ॥ ८३ ॥
दरदाकर्षितः सूतो गुणैरेवंविधो भवेत् ।

दरदशोधनम् ।

कूष्माण्डखण्डमध्ये तु स्वेदितो लकुचाम्बुना ॥ ८४ ॥

सकृत्संजायते शुद्धः सर्वकार्येषु योजयेत्।

बोदारशृङ्गलक्षणम्।

भवेद्गुर्जरके देशे सदलं पीतवर्णकम्।
अर्बुदस्य गिरेः पार्श्वे नाम्ना बोदारशृङ्गकम् ॥ ८५ ॥

बोदारशृङ्गगुणाः।

नागसत्वं लिङ्गदोषहरं श्लेष्मविकारनुत्।
रसबन्धकरं सम्यक्छ्मश्रुरञ्जनकं परम् ॥ ८६ ॥

साधारणरसशोधनम्।

साधारणरसाः सर्वे बीजपूररसेन वै।
त्रिवारं भाविताः शुष्का जायन्ते दोषवर्जिताः ॥ ८७ ॥

इति श्रीपद्मनाभसूनुना श्रीयशोधरेण विरचिते रसप्रकाशसुधाकरे षष्ठोऽध्यायः।

---

## अथ सप्तमोऽध्यायः।

नवरत्नानि।

माणिक्यं मौक्तिकं चैव विद्रुमं तार्क्ष्यपुष्पकम्।
वज्रं नीलं च गोमेदं वैडूर्यं च क्रमेण हि ॥ १ ॥
सुजाति गुणसंपन्नं रत्नं सर्वार्थसिद्धिदम्।
दाने रसायने चैव धारणे देवतार्चने ॥ २ ॥

माणिक्यभेदाः।

पद्मरागाभिधं श्रेष्ठं प्रथमं तदुदीरितम्।
द्वितीयं नीलगन्धि स्यात्, घनं रक्तं सुशोभनम् ॥ ३ ॥
महच्च कमलच्छायं स्निग्धं स्वच्छं गुरु स्फुटम्।
समं वृत्तायतं गात्रे माणिक्यं चोत्तमं मतम् ॥ ४ ॥
गङ्गोदकसमुद्भूतं नीलगर्भारुणच्छवि।
माणिक्यं पूर्ववच्छेषं नीलगन्धि तदुच्यते ॥ ५ ॥

माणिक्यदोषाः ।

माणिक्यं चाष्टधा नेष्टं सच्छिद्रं मलिनं लघु ।
कर्कशं चिपिटं वक्रं सूक्ष्मं चाविशदं तथा ॥ ६ ॥

माणिक्यगुणाः ।

संदीपनं वृष्यतमं हि रूक्षं वातापहं कर्मरुजापहं च ।
भूतादिदोषत्रयनाशनं परं राज्ञां सदा योग्यतमं प्रशस्तम् ॥ ७ ॥

शुद्धमौक्तिकलक्षणम् ।

ह्लादि श्वेतं रश्मिमन्निर्मलं च वृत्तं ख्यातं मौक्तिकं तोयभासम् ।
स्निग्धं तौल्ये गौरवं चेन्महत्तल्लिङ्गैरेतैर्लक्षितं तच्च शुद्धम् ॥ ८ ॥

वर्ज्यमौक्तिकलक्षणम् ।

रूक्षाङ्गं चेन्निष्प्रभं श्यावताम्रं चार्धं शुभ्रं ग्रन्थिलं मौक्तिकं च ।
क्षाराभासं वैकटं[1] युग्मकं च दोषैर्युक्तं सर्वथा त्याज्यमेभिः ॥९॥

मौक्तिकगुणाः ।

कासं श्वासं वह्निमान्द्यं क्षयं च हन्याद्वृष्यं बृंहणं पित्तहारि ।
दाहश्लेष्मोन्मादवातादिरोगान् हन्यादेवं सेवितं सर्वकाले॥१०

श्रेष्ठविद्रुमलक्षणम् ।

स्निग्धं स्थूलं पक्वबिम्बीफलाभं वृत्तं दीर्घं निर्व्रणं चाप्यवक्रम् ।
ख्यातं सद्भिः सप्तधा विद्रुमं च दोषैर्मुक्तं सर्वकार्येषु शस्तम्॥११

सदोषविद्रुमलक्षणम् ।

रूक्षं श्वेतं सव्रणं धूसरं च निर्भारं चेच्छुल्बवर्णं प्रवालम् ।
दोषैर्युक्तं कोटरैरावृतं च नेष्टं सद्भिर्भक्षणे धारणे च ॥ १२ ॥

प्रवालगुणाः ।

पित्तास्रघ्नं श्वासकासादिरोगान् हन्यादेवं दुर्निवारं विषं च ।
भूतोन्मादान्नेत्ररोगान्निहन्यात्सद्यः कुर्याद्दीपनं पाचनं च ॥१३॥

---

१ विकटमेव वैकटं, विकटमित्यर्थः ।

श्रेष्ठतार्क्ष्यलक्षणम्।

तार्क्ष्यं स्निग्धं भासुरं शष्पवर्णं[1] गात्रैः शुद्धं भारवद्रश्मियुक्तम्।
एते प्रोक्ता सप्तसंख्या गुणा वै दाने शस्तं भक्षणे धारणे च १४

त्याज्यतार्क्ष्यलक्षणम्।

नीलं श्वेतं कर्कशं श्यावरुक्षं वक्रं कृष्णं चिप्पटं भारहीनम्।
दुष्टं तार्क्ष्यं चौषधे नोपयोज्यं

तार्क्ष्यगुणाः।

कासं श्वासं सन्निपाताग्निमान्द्यम्॥१५॥
शोफं शूलं जूर्तिरोगं[2] विषं च दुर्नामानं वै पाण्डुरोगं निहन्यात् १६

श्रेष्ठपुष्परागलक्षणम्।

स्वच्छं स्थूलं पुष्परागं गुरु स्यात्स्निग्धं वर्णे कर्णिकारप्रसूनम्।
तच्चावक्रं मसृणं कोमलं च लिङ्गैरेतैः शोभनं पुष्परागम्॥१७॥

त्याज्यपुष्परागलक्षणम्।

रूक्षं पीतं कर्कशं श्यामलं च पाण्डु स्याद्वा कापिलं[3] तोयहीनम्।
दोषैर्युक्तं निष्प्रभं पुष्परागं नो सेव्यं तन्नैव देयं द्विजेभ्यः॥१८॥

पुष्परागगुणाः।

कुष्ठं छर्दिं श्लेष्मवातौ निहन्ति मन्दाग्नीनामेतदेव प्रशस्तम्।
दाहे कृच्छ्रे, दीपनं पाचनं च तस्मात्सेव्यं सर्वदा सर्वकाले १९

वज्रभेदाः।

सर्वेषु रत्नेषु सदा वरिष्ठं मूल्यैर्गरिष्ठं त्रिविधं हि वज्रम्।
नरश्च नारी च तथा तृतीयं[4] तेषां गुणान्वच्मि समासतो हि २०
पूर्वं पूर्वं श्रेष्ठमेतत्प्रदिष्टं द्रव्याद्वीर्यात्पाकतश्च प्रभावात्।
तेषां वर्णा जातयश्च प्रभेदाः कथ्यन्तेऽष्टौ शास्त्रतश्चापकर्षात्[5]॥२१
श्वेतादिकं वर्णचतुष्टयं हि सर्वेषु रत्नेषु च कथ्यते बुधैः।
स्युर्ब्राह्मणक्षत्रियवैश्यशूद्रास्ते जातयो वै क्रमशश्च वर्णाः॥२२॥

---

१ शष्पं बालतृणं, तद्वर्णस्येव वर्णो यस्य तत्, हरिद्वर्णमित्यर्थः। २ जूर्तिरोगमिति ज्वरमित्यर्थः। ३ कपिलमेव कापिलं, कपिलमित्यर्थः। ४ तृतीयमिति नपुंसकमित्यर्थः। ५ अपकर्षादिति संक्षेपादित्यर्थः।

पुंवज्रं यत्प्रोच्यते चाष्टधारं षट्कोणं चेदिन्द्रचापस्य वर्णम् ।
अष्टौ चेत्स्युः फालका[1] भासुरं वै पूर्वं श्रेष्ठं सर्वदोषापहं स्यात्॥२३

स्त्रीवज्रं चेत्तादृशं वर्तुलं हि किंचिच्चैवं चिप्पटं कर्कशं च ।
कोणाग्रं वै कुण्ठकं वर्तुलं हि किंचिद्धीनं प्रोच्यते तत्तृतीयम् ॥२४

स्त्री पुमान् स्त्री नो पुमान्[2]यच्च वज्रं योज्यं तच्च स्त्रीषु पुंस्वेव षण्ढे ।
व्यत्यासाद्वै नैव दत्तं फलं तद्दद्याद्वज्रं वा विना तत्पुमांसम् ॥२५

वर्णेऽप्येवं यस्य वर्णस्य वज्रं तत्तद्वर्णे शोभनीयं प्रदिष्टम् ।
न्यायश्चायं भैरवेण प्रदिष्टः सर्वेष्वेवं रत्नवर्गेषु सम्यक् ॥ २६ ॥

वज्रगुणाः ।

आयुःप्रदं वृष्यतमं प्रदिष्टं दोषत्रयोन्मूलनकं सदैव ।
रसेन्द्रकस्यापि हि बन्धकृत्सदा सुधासमं चापमृतिं च हन्यात् २७

रत्नदोषाः ।

वर्षे[3]श्च बिन्दुश्च तथैव रेषा त्रासे[4]श्च पानीयकृता सगर्भता ।
सर्वेषु रत्नेषु च पञ्च दोषाः साधारणास्ते कथिता मुनीन्द्रैः ॥२८॥

ये क्षेत्रतोयप्रभवाश्च दोषाः सर्वेषु रत्नेषु गलन्ति सम्यक् ।
तेषां च शुद्धिं शृणु भैरवोक्तां यथा हि दोषस्य विनाशनं भवेत् २९

रत्नानां शोधनम् ।

अम्लेन वै शुद्ध्यति माणिकाख्यं
जयन्तिकायाः स्वरसेन मौक्तिकम् ।
क्षारेण सर्वेण हि विद्रुमं च
गोदुग्धतस्तार्क्ष्यमुपैति शुद्धिम् ॥ ३० ॥

धान्यस्याम्लैः पुष्परागस्य शुद्धिं कौलत्थे वै क्वाथ्यमानं हि वज्रम्।
नीलं नीलीपत्रजातै रसैश्च गोमेदं वै रोचनाभिस्तथैव ॥ ३१ ॥

---

१ फलका एव फालकाः । फलकाः पार्श्वाः । २ स्त्री नो पुमानिति नपुंसकमित्यर्थः । ३ 'गारश्च' इति पाठान्तरम् । ४ त्रास इति वक्रतेत्यर्थः ।

वैडूर्यं चेदुत्तमाक्काथयुक्तं यामैकं वै स्वेदितं शुद्धिमेति।

वज्रशोधनम्।

यामावधि स्वेदितमेव वज्रं शुद्धिं प्रयातीति कुलत्थतोये॥३२॥
सिद्धं तथा कोद्रवजे शृते वा वज्रं विशुद्ध्येद्धि विनिश्चयेन।

वज्रमारणम्।

सुभावितं मत्कुणशोणितेन वज्रं चतुर्वाँरविशोषितं च॥ ३३॥
छुच्छुन्दरीस्थं हि विपाचितं पुटे पुटेद्वराहेण च त्रिंशदेवम्।
ध्मातं पुनर्ध्माय शतं हि वारान् क्वाथे कुलत्थस्य हि निक्षिपेच्च ३४
संपेषयेत्तं हि शिलातलेन मनःशिलाभिः सह कारयेद्वटीम्।
क्षिप्त्वा निरुन्ध्यापि च मूषिकायां पुटान्यथाष्टौ च वनोपलैर्ददेत्॥
वारान् शतं चापि ततो धमेत संमर्दितं शोधितपारदेन।
वज्राणि सर्वाणि मृतीभवन्ति तद्भस्मकं वारितरं भवेच्च॥३६॥
श्रीसोमदेवेन च सत्यवाचा वज्रस्य मृत्युः कथितो हि सम्यक्।
कासमर्दरसपूर्णलोहजे मत्कुणस्य रुधिरैर्विलेपितम्॥ ३७॥
स्वेदितं च भिंदुरं[1] हि सप्तभिर्वासरैः परिनिषिच्य मूत्रके।
ध्मापितं हि खलु वज्रसंज्ञकं मारयेदिति वदन्ति तद्विदः॥३८॥
नीलज्वालावीरुधः कन्दकेषु घृष्टं घर्मे शोषितं भस्मभावम्।
वज्रं याति स्वैरवह्निप्रदानात्पिष्टैश्चापि क्षोणिनागैः प्रलिप्तम् ३९
विंशद्वारान् संपुटेच्च प्रयत्नादारण्यैर्वा गोमयैस्तद्धठाग्नौ।
वज्रं चैवं भस्मसाद्वीर्ययुक्तं सर्वस्मिन्वै योजनीयं रसादौ॥४०॥

वज्रयोगाः।

भूनागसत्त्वेन समं विमर्द्य वज्रस्य भूतिं च समानहेम्ना।
ध्मातं रसादावपि योजनीयं रसायनं तद्भवतीह सम्यक्॥४१॥
भागास्त्रयश्चैव हि सूतकस्य भागं विमर्द्याथ मृतं हि वज्रम्।
वज्रस्य भूतिः किल पोटलीकृता मुखे धृता दार्ढ्यकरी द्विजानाम्॥

---

१ भिदुरमिति वज्रमित्यर्थः।

वज्रभस्म किल भागत्रिंशकं स्वर्णमेव कथितं कलांशकम् ।
अष्टभागमिह तारकं कुरु सूतमत्र समभागकं सदा ॥ ४३ ॥
अभ्रसत्वभसितं समांशकं तुर्यभागमिह ताप्यकं भवेत् ।
वैक्रान्तकं भस्म इहाष्टभागकं षडेव भागा हि बलेर्विधेयाः॥४४॥
षाड्गुण्यसंसिद्धिमुपैति सर्वदा सर्वार्थसंसिद्धिमुपैति सेविते ।

नीलभेदाः ।

इन्द्रनीलमथ वारिनीलकं, श्वैत्यगर्भितमथापि नीलकम्॥४५॥
कथ्यते हि लघु वारिनीलकं तुच्छमेव कथितं भिषग्वरैः ।
कान्त्या युक्तं कार्ष्ण्यगर्भं च नीलं तच्चाप्युक्तं शक्रनीलं सदैव ४६

श्रेष्ठनीललक्षणम् ।

एकच्छायं स्निग्धवर्णं गुरु स्यात्स्वच्छं मध्ये चोल्लसत्कान्तियुक्तम्।
नीलं प्रोक्तं पिण्डितं सप्तसंज्ञैरेतैर्लिङ्गैर्लक्षितं चोत्तमं हि ॥ ४७॥

त्याज्यनीललक्षणम् ।

निर्भारं चेत्कोमलं चाम्लगन्धि रूक्षं वर्णे सूक्ष्मकं चिप्पटं च ।
प्रोक्तं वै तद्वारिनीलं भिषग्भिरेतैर्लिङ्गैः सप्तभिः क्षेपणीयम्॥४८॥

नीलगुणाः ।

संदीपनं श्वासहरं च वृष्यं दोषत्रयोन्मूलनकं विषघ्नम् ।
दुर्नामपाण्डुघ्नमतीव बल्यं जूर्तिं जयेन्नीलमिदं प्रशस्तम्॥४९ ॥

श्रेष्ठगोमेदलक्षणम् ।

गोमेदकं रत्नवरं प्रशस्तं गोमेदवद्रागयुतं प्रचक्षते ।
सुस्वच्छगोमूत्रसमानवर्णं गोमेदकं शुद्धमिहोच्यते खलु ॥५०॥
दीप्तं स्निग्धं निर्दलं मसृणं वै मूत्रच्छायं स्वच्छमेतत्समं च ।
एभिर्लिङ्गैर्लक्षितं वै गरीयः सर्वेषु कार्येषु च योजनीयम् ॥५१॥

वर्ज्यगोमेदलक्षणम् ।

विच्छायं वा चिप्पटं निष्प्रभं च रूक्षं चाल्पं चावृतं पाटलेन[1] ।
निर्भारं वा पीतकाचाभयुक्तं गोमेदं चेदीदृशं नो वरिष्ठम्॥५२॥

---

१ पाटलेनेति पटलेनेत्यर्थः ।

गोमेदगुणाः ।

गोमेदकं पित्तहरं प्रदिष्टं पाण्डुक्षयघ्नं कफनाशनं च ।
संदीपनं पाचनमेव रुच्यमत्यन्तबुद्धिप्रविबोधनं च ॥ ५३ ॥

श्रेष्ठवैडूर्यलक्षणम् ।

स्वच्छं समं चापि विडूर्यकं हि श्यामाभशुभ्रं च गुरु स्फुटं हि ।
यज्ञोपवीतोपमशुद्धरेषास्त्रिस्रश्च संदर्शयतीह शुभ्राः ॥ ५४ ॥

त्याज्यवैडूर्यलक्षणम् ।

कर्कशं च लघु चिप्पटं सदा श्यामतोयमिव दृश्यते छविः ।
रक्तगर्भसममुत्तरीयकं नैव शोभनमिदं विदूर्यकम् ॥ ५५ ॥

वैडूर्यगुणाः ।

रक्तपित्तशमनं विडूर्यकं बुद्धिवर्धनकरं च दीपनम् ।
पित्तरोगमलमोचनं सदा धारयेच्च मतिमान् सुखावहम् ॥५६॥

रत्नमारणम् ।

तालगन्धकशिलासमन्वितं मर्दयेल्लकुचवारिणा खलु ।
विना वज्रमपि चाष्टभिः पुटै रत्नभूतिर्भवतीति वै सदा ॥५७॥

रत्नद्रुतिविधानम् ।

रामठं लवणपञ्चकं सदा क्षारयुग्ममपि चेत्सुपेषितम् ।
चूलिकालवणमम्लवेतसं सुपक्वकुम्भीकफलं तथैव ॥ ५८ ॥
चित्रमूलकरुदन्तिके शुभा जम्बुकी जलयुता द्रवन्तिका ।
अर्कदुग्धसमसौधदुग्धकं सर्वमेव मृदितं शिलातले ॥ ५९ ॥
गोलमस्य च विधाय निक्षिपेद्रत्नजातिषु वराणि पेषयेत् ।
भूर्जपत्रमभिवेष्ट्य गोलके गोलकोपरि निवेष्ट्य सूत्रतः ॥ ६० ॥
वस्त्रेण संवेष्ट्य ततः प्रयत्नाद्दोलाख्ययन्त्रेऽथ निवेश्य गोलकम् ।
सर्वाम्लयुक्ते तुषवारिपूरिते पात्रे दृढे मृन्मयसंज्ञके हि ॥ ६१ ॥
दिनत्रयं स्वेदनकं विधेयमाहृत्य तस्माद्वरगोलकं हि ।
संक्षालयेच्चाम्लजलेन चापि संजायते रत्नभवा द्रुतिश्च ॥ ६२॥

---

१ जम्बुकी जलयुता इति जलजम्बुकीत्यर्थः ।

रत्नद्रुतिलक्षणम् ।

वर्णेन सा रत्ननिभा च कान्त्या लघ्वी भवेद्देहकरी च सम्यक् ।
लोहस्य वेधं प्रकरोति सम्यक् सूतेन सम्यङ्मिलनं प्रयाति॥६३॥
तदा भवेयुः खलु सिद्धिदा यदा हिङ्ग्वादिवर्गेण मिलन्ति सम्यक्
यामद्वयं कांस्यविमर्दिता वै चातिप्रयत्नेन तु वैद्यवर्यैः ॥ ६४ ॥
कस्यापि नुः सिध्यति वै द्रुतिश्च यदा प्रसन्नो भवतीह देवः ।
विष्णोश्च भक्तिः खलु दुर्लभा वै तद्वत्सूते बन्धनं दुर्लभं च॥६५॥
तासां मध्ये दुर्लभाऽभ्रद्रुतिश्च स्वल्पं भाग्यं भूरिदौर्भाग्यतोऽपि ।

सप्तमाध्यायोपसंहारः ।

रत्नानां क्रमतो गुणाश्च कथितास्तच्छोधनं मारणं
तेभ्यश्चैव हि सत्वपातनमथो सम्यग्द्रुतेः पातनम् ।
सर्वेषां हि परीक्षणं च द्रुतयः संमेलनं वै रसे
ग्रन्थेऽस्मिन्परिदर्शितानि सकलान्येवं हि कर्माणि वै ॥६६॥

---

## अष्टमोऽध्यायः ।

भवति गदगणानां नाशनं येन सद्यो
विविधरसविधानं कथ्यतेऽत्रैव सम्यक् ।
रसनिगमसुधाब्धौ मथ्यमाने मयैव
गणितरसशतानां संग्रहः प्रोच्यते वै ॥ १ ॥

अथ रसाः

ज्वराङ्कुशो रसः ।

सुखण्डितं हारिणजं विषाणं रसेन पाच्यं जलजम्बुकस्य ।
रुद्ध्वाऽथ भाण्डे विपचेच्च चुल्ल्यां यामद्वयं शीतगतं समुद्धरेत् ॥२॥
ततोऽष्टभागं त्रिकटुं नियोज्य निष्कप्रमाणं विभजेत्प्रभाते ।
तं नागवल्ल्या दलजैर्द्रवैश्च निहन्ति वातोद्भवकं ज्वरं च ॥ ३ ॥

ज्वरारिरसः।

पारदं रसकगन्धतालकतुत्थटङ्कणयुतं सुशोधितम्।
मर्दयेच्च सममात्रमेकतः कारवेल्लजरसैर्दिनं तथा॥ ४॥
लेपयेच्च रविभाजनोदरे चाङ्गुलार्धमपि मानमेव हि।
ताम्रभाजनमुखं निरुध्य वै तं पचेत्सिकतयन्त्रमध्यतः॥ ५॥
धान्यकान्युपरि मुञ्चितानि चेत् संस्फुटन्ति यदि शुद्धमित्यति।
जायतेऽतिरुचिरो ज्वरारिकः सेवितो ज्वरगणापहारकः॥ ६॥
माषमात्रमुषणैः समैः सदा पर्णखण्डसहितैश्च भक्षितः।
नाशयेद्धि विषमोद्भवान् ज्वरानन्धकारमिव भास्करोदयः॥७॥

तरुणज्वरारिरसः।

तालताम्ररसगन्धतुत्थकांश्छाणमात्रतुलितान्समानपि[1]।
निष्कमात्ररुचिरां मनःशिलां मर्दयेत्रिफलकाम्बुभिर्दृढम्॥ ८॥
गोलमस्य च विधाय संपुटे पाचयेच्च पुटयोगतः सदा।
अर्कवज्रिपयसा सुभावयेत् सप्तवारमथ दन्तिकाशृतैः॥ ९॥
माषमात्ररसमेव भक्षितं शाणमानमरिचैर्युतं सदा।
सार्धनिष्कगुडमत्र योजितं तच्च सौरसदलद्वयान्वितम्॥ १०॥
शीतपूर्वमथ दाहपूर्वकं त्र्याहिकं च सकलान् ज्वरानपि।
नाशयेद्धि तरुणज्वरारिकः सर्वदोषशमनः सुखावहः॥ ११॥

ज्वरघ्नी गुटिका।

भागैकः स्यात्पारदः शोधितश्च एलीयः स्यात्पिप्पली श्रेयसी च।
आकल्लौ वै गन्धकः सार्षपेण तैलेनायं शोधितो बुद्धिमद्भिः १२
तुर्यान् भागानिन्द्रवल्लीफलानां कृत्वा चूर्णं शोषयेत्सूर्यतापे।
चूर्णं वै तद्भावयेत्तद्रसेन माषैस्तुल्यां कारयेद्वै वटीं च॥१३॥
दत्त्वा चैकां जातसद्योज्वराय छिन्नाङ्गायाः क्वाथपानं विधेयम्।
दोषोद्भूतां संनिपातोद्भवां च जूर्तिं सम्यङ्नाशयत्येष तीव्राम्॥

---

१ समानपीति सर्वानपीत्यर्थः।

ज्वरकृन्तनो रसः ।

शुद्धः सूतो गन्धको वत्सनाभः प्रत्येकं वै शाणमात्रा विधेयाः।
धूर्ताद्बीजं कारयेद्वै त्रिशाणं सर्वेभ्यो वै द्वैगुणा हेमवल्ली ॥१५॥
सूक्ष्मं चूर्णं कारयेत्तत्प्रयत्नाद्देयं गुञ्जाद्विप्रमाणं च सम्यक् ।
भक्षेदार्द्रं चानुपाने ज्वरार्तः सद्यो हन्यात्सर्वदोषान् ज्वरांश्च॥१६

ज्वरारिरसः ।

सूतं गन्धं हिङ्गुलं दन्तिबीजं भागैर्वृद्धं कारयेच्च क्रमेण ।
चूर्णं कृत्वा मर्दितं दन्तितोये गुञ्जामात्रं भक्षितं जूर्तिहारि ॥१७

ज्वरे सूर्यरसः ।

एकं भागं वत्सनाभं च कुर्याद्द्वौ भागौ चेट्टङ्कणं दन्तिबीजम् ।
त्रीण्येवैते हिङ्गुलस्यापि तुर्यः सद्यो जूर्तिं नाशयत्येष सूर्यः ॥१८॥

प्रतिज्ञावाचको रसः ।

शुद्धं सूतं भागमेकं तु तालाद्द्वौ भागौ चेद्वेदसंख्याः शिलायाः।
ताम्रस्यैवं भागयुग्मं प्रकुर्याद्वल्लातं वा वेदभागं तथैव ॥ १९ ॥
अर्कक्षीरैर्भावयेच्च त्रिवारं कृत्वा चूर्णं कारयेद्गोलकं तत् ।
स्थालीमध्ये स्थापितं तच्च गोलं दत्त्वा मुद्रां भस्मना सैन्धवेन॥२०
धूमस्यैवं रोधनं च प्रकुर्याच्छाणैर्दद्यात् स्वेदनं मन्दवह्नौ ।
पश्चात्तोयेनैव भाव्यं च चूर्णं गोलं कृत्वा मन्दवह्नौ विपाच्य ॥
पश्चादेनं भक्षयेद्वै रसेन्द्रं वल्लं चैकं शर्कराचूर्णमिश्रम् ।
तद्वत्कृष्णामाक्षिकेणैव जूर्तिं हन्यादेतत्सर्वदोषोत्थितां वै ॥२२॥

ज्वराङ्कुशो रसः ।

सूतगन्धविषकारवीकणादन्तिबीजमिति वर्धितैः क्रमात् ।
मर्दितैश्च दशनिम्बुकद्रवै रक्तिकार्धतुलिता वटीकृता ॥ २३ ॥
भक्षिता ज्वरगणान्निहन्ति वै सद्य एव विनिहन्ति सूचिकाम्२४

ज्वराङ्कुशो रसः ।

एक एव कथितस्तु सोमलः स्वेदितोऽपि सह चूर्णजलेन ।
यामपूर्वमपि रक्तिकामितो भक्षितः सकलशीतजूर्तिहृत् ॥ २५॥

अथातीसारशमनान् रसान् संकथयामि वै ।
भक्षिताश्चैव ये नित्यं सद्यःप्रत्ययकारकाः ॥ २६ ॥

शङ्खोदररसः ।

शुद्धं सूतं गन्धकं वै समांशं चित्रोन्मत्तैर्मर्दयेद्वासरैकम् ।
चूर्णैरेतैः शङ्खमापूरितं वै भाण्डे स्थाप्यं मुद्रितव्यं प्रयत्नात् ॥२७
तस्याधःस्तादष्टयामं प्रकुर्याद्वह्निं शीते कर्षमात्रं विषं हि ।
दत्त्वा, घर्मे त्रीणि चापि पुटानि दद्यात्तद्वत् कन्यकाया रसेन २८
वल्लं योज्यं जीरकेणाथ भृङ्ग्या क्षौद्रैर्युक्तं भक्षितं च ग्रहण्याम् ।
श्वासे शूले चानिले श्लेष्मजे वा कासेऽर्शःसु विड्ग्रहे चातिसारे २९

आनन्दभैरवी गुटिका ।

सौभाग्यं वै हिङ्गुलोत्थं विषं च मारीचं वै हेमबीजेन युक्तम् ।
कृत्वा चूर्णं सर्वमेतत्समांशं जम्बीरैर्हि मर्दितं यामयुग्मम् ॥३०॥
गुञ्जामात्रा निर्मिता भक्षिता च गुटी हन्यात्सन्निपातातिसारम्।

अतिसारभैरवी गुटिका ।

जातीपत्रं देवपुष्पं च शुण्ठी कङ्कोलं चेच्चन्दनं कुङ्कुमं च ॥३१॥
कृष्णाचूर्णं शुद्धमाकल्लकं स्यात् सर्वाण्येवं चूर्णयेद्वै समानि ।
सूतस्यैवं भस्म मिश्रं प्रकुर्यात् भागं चैकं मिश्रयेन्नागफेनम्॥३२॥
खल्वे सर्वं मर्दितं चैकयामं कार्या गोली वल्लमात्रा जलेन।
भक्षेद्रात्रौ पाययेत्तण्डुलोदं हन्यात्सर्वान् सर्वदोषातिसारान् ३३

कनकसुन्दरी गुटिका ।

मारीचं चेट्टङ्कणं हिङ्गुलं च गन्धाश्मा वै पिप्पलीवत्सनाभम् ।
धूर्तस्यैवं बीजकानीह शुद्धान्येवं कृत्वा तच्च चूर्णं विधेयम् ॥३४॥
प्रातः सायं भक्षितं वल्लमात्रं जूर्तिं रक्तं नाशयेच्चातिसारम् ।
दध्यन्नं वा भोजयेत्तक्रयुक्तं हन्यादेवं चाग्निमान्द्यं सुतीव्रम् ३५

कर्पूरसुन्दरीवटिका ।

कर्पूरजातीफलजातिपत्रिकाधत्तूरबीजं जलराशिशोषणम् ।
आकल्लकं व्योषमिदं समांशं द्वीपान्तरोत्था च कुबेरकाक्षम् ३६

सर्वौषधार्धा विजया प्रदिष्टा जीर्णाहिफेनं च तया समानम् ।
तदर्धभागं खलु वत्सनाभं स्यादेकतश्चात्र विधाय चूर्णम् ॥ ३७॥
तद्भावितं भृङ्गरसेन सम्यक् कोलास्थिमात्रा गुटिका विधेया ।
सा शीतवाते ग्रहणीगदे च अर्शोविकारे प्रबलातिसारे ॥ ३८॥
मन्दे च वह्नौ स्मरपुष्टिकर्त्री साऽऽफेनसेवाकुलमुक्तिदात्री ।

ग्रहणीकपाटरसः ।

तारं स्वर्णं माक्षिकं शुद्धलोहं भागं चैकं गन्धकं भागयुग्मम् ३९
शुद्धं सूतं मारितं तत्रिभागं खल्वे सर्वं मर्दितं वासरैकम् ।
सर्वं योज्यं हारिणे शृङ्गकेऽपि लेप्यं मृत्स्ना वाससा वेष्टितं च४०
वाराहाख्ये तत्पुटे गर्तमध्ये आरण्यैर्वै गोमयैः पाचयेद्धि ।
उत्तार्यैनं स्वाङ्गशीतं प्रकुर्यात् खल्वे धृत्वा मर्दयेत्तं सुवैद्यः ॥४१॥
पश्चादेनं स्वे रसेनाथ सम्यक् भृङ्गाह्वाया भावयेत्सप्तवारान् ।
चूर्णं दत्त्वा लोध्रमुस्तामदाह्वच्छिन्नापाठाशक्रबीजोद्भवं च ४२
कापित्थैर्वा स्वै रसैः सुशृतैर्वा भाव्यं सर्वं त्रीणि वाराणि सम्यक् ।
सम्यक् शुष्कं गालितं वस्त्रखण्डे माषं चैकं लेहितं माक्षिकेण४३
कृष्णाचूर्णैर्माषयुग्मैश्च युक्तं हन्याच्चायं ग्रहणीं दोषजां वै ।

वज्रकपाटरसः ।

गन्धं यवक्षारमथाभ्रकं च सूतं विषं टङ्कणमेव शुभ्रम् ॥ ४४ ॥
वचाग्निमन्थं सममत्र कुर्याज्जयन्तिजम्बीरकभृङ्गजद्रवैः ।
विमर्दयेत्तं त्र्यहमेव यत्नाद्गोलं विधायाथ विशोष्य सम्यक्४५
लोहस्य पात्रे च शरावकं वै दत्त्वा दृढं चोपरि मुद्रयेत्तम् ।
अध्यर्धयामं शनकैः प्रकुर्याद्वह्निं सुशीतं हि ततोऽवतारयेत् ४६
रसेन तुल्यां प्रविषां प्रदद्यात् कपित्थभृङ्गीरसमोचकैश्च ।
देया बुधैर्भावनिकाश्च सप्त सूर्यातपे वै हि विमर्द्य खल्वे ॥४७॥
तथेन्द्रबीजानि च धातकी च बिल्वस्य पत्रं च पृथक्समं स्यात् ।

आसां रसैर्भावय चैकवेलं पश्चाच्च संमर्द्य विधाय चूर्णम् ४८
रसं च वज्राख्यकपाटकं हि शाणैकमात्रं मधुनाऽवलीढम्।
सवह्निशुण्ठीविडसैन्धवं च उष्णाम्बुना वा मथितेन सम्यक् ४९
पीतं तदुग्रं ग्रहणीविकारं हिनस्ति वातप्रभवां रुजं च।
तथा कफोत्थां च सपैत्तिकां हि हन्यादतीसारहरं परं स्यात् ५०

अतिसारहरो रसः।

रालमोचरसनागफेनकं वत्सकातिविषमेव नागरम्।
चूर्णितं च मधुनावलेहितं वल्लमात्रमतिसारकं जयेत्॥ ५१॥

मलपाचनी गुटी।

मिश्रदेशजमतीव शुद्धकं नागफेनमपि नागरावृतम्।
घर्षितं तु वरचन्दनैर्युतं कारयेच्च वटिकां सुशोभनाम्॥ ५२॥
रक्तिकात्रयमितां च भक्षयेत् पाययेत्तदनु तन्दुलोदकम्।
हन्ति चैवमतिसारकं सदा चामदोषमलनाशिनी भवेत्॥ ५३॥

अतिसाराङ्कुशरसः।

अङ्कोल्लमूलप्रभवा त्वचा च छायाविशुष्काऽथ विचूर्णिता वै।
चूर्णं लिहन् शाणमितं समाक्षिकं जयेदतीसाररुजं परं च॥ ५४॥

पाण्डुकुठाररसः।

गन्धकाभ्ररसलोहभस्मकं शाल्मलीमुसलिकागुडूचीभिः।
भावयेत्त्रिफलकार्द्रकन्यकावह्निशक्रजरसैश्च सप्तधा॥ ५५॥
जायते हि भुविजोऽमृतस्रवः प्लीहपाण्डुविनिवृत्तिदायकः।
वल्लयुग्मपरिमाणतस्त्वयं लेहितश्च घृतमाक्षिकान्वितः॥ ५६॥
शोफपाण्डुविनिवृत्तिदायकः सेवितश्च यवचिञ्चिकाद्रवैः।

पाण्डुनाशनरसः।

स्वर्णरूप्यमथ शाणमात्रकं शुद्धताम्रमथ तत्समं कुरु॥ ५७॥
रसवरं सकलेन समं हि वै पिष्टिकां कुरु विमर्द्य च गोलकम्।

---

१. मिश्रदेशः 'मिसर' 'इजिप्त' इति च नाम्ना प्रसिद्धः।

गन्धकेन परिवेष्ट्य गोलकं पाचयेच्च मतिमान् भिषक् सदा ५८
भूमिमध्यनिहितं सुयन्त्रितं यामषट्कमथवाष्टकं ततः।
गन्धमन्यमपि निक्षिपेत्पुटे एवमत्र परिजारयेद्बुधः॥ ५९॥
निम्बुजेन परिपेष्य षड्गुणं गन्धचूर्णमथ लोहचूर्णकम्।
योजयेच्च पलमानतस्ततो लोहपात्रकुहरे पुटत्रयैः॥ ६०॥
पाचयेच्च चिरबिल्ववह्निना पाण्डुनाशनरसस्ततो भवेत्।
वल्लमस्य मधुपिप्पलीयुतं लेहितं सकलपाण्डुनाशनम्॥ ६१॥

द्वितीयपाण्डुनाशनरसः।

सूक्ष्मं ताम्रदलं विलेप्य बलिना सूतेन चापि तथा
स्थालीमध्यगतं सुपाचितमिदं यामद्वयं वह्निना॥
नागं गन्धकसंयुतं च पुटितं चित्रार्द्रसंमिश्रितम्
चूर्णीकृत्य समं सुशोभनरसं संयोजयेच्छास्त्रवित्॥६२॥
शोफपाण्डुकफवातनाशनो रक्तिकैकपरिमाणतस्त्वयम्।
सेवयेच्च लघु चान्नभोजनं तैलमम्ललवणामिषं विना॥ ६३॥

पाण्डुसूदनरसः।

सूतं तीक्ष्णकमेव गन्धसहितं भागेन संवर्धितं
पश्चात्खल्वतले विमर्द्य विधिना चूर्णीकृतं गालितम्।
कूप्यां संविनिवेश्य सुमृदया संलेपितायां पचेत्
यामद्वादशमात्रकं हि सिकतायन्त्रेण वैद्यः सदा॥६४॥
प्रक्षिपेच्च वरशाल्मलीरसं त्रैफलं च गुडवल्लिकाद्रवम्।
पाचयेच्च मृदुवह्निना दिनं स्वाङ्गशीतलमयं प्रगृह्य च॥ ६५॥
त्र्यूषणार्द्रकरसेन भावयेत्पाण्डुसूदनरसोऽयमीरितः।
शुष्कपाण्डुविनिवृत्तिदायको रोगराजहरणः प्रकीर्तितः॥ ६६॥

मृगाङ्करसः।

सूक्ष्माणि पत्राणि हि हाटकस्य भूर्जोपमान्यप्यथ कारयेच्च।
तुल्यानि सूतेन समेन खल्वे क्षिप्त्वा त्वहोरात्रमु तानि मर्दयेत्६७

१ सुयन्त्रितमिति 'शरावसंपुटे' इति शेषः।

ज्वालामुखीस्वरसकेन च काञ्चनार-
क्काथेन लाङ्गलीरसेन तथा विमर्द्य।
पिष्टी यथा दृढतरा भवतीह पश्चा-
द्गोलं विधाय रुचिरं सह टङ्कणेन ॥ ६८ ॥
सर्वैः समानमथ गन्धवरं विशुद्धं
गोलं विधाय रुचिरं रविघर्मशुष्कम्।
वस्त्रेण वेष्टितमिदं मृदया च लिप्तं
तच्छ्रावसंपुटवरेऽपि विमुद्रितव्यम् ॥ ६९ ॥
धार्यं ततो लवणपूरितभाण्डमध्ये
दद्यात्ततो छगणकैर्बहुभिः पुटं तु।
शीतं प्रयातमुपलक्ष्य ततः प्रयत्ना-
द्धृष्ट्वा च पूर्वविधिवत् खलु यन्त्रमध्ये ॥ ७० ॥
दत्त्वा पुटं गजपुटेन च शीतमत्र
भक्षेदिमं रसवरं सुखदं नृणां हि।
क्षौद्रेण युक्तमगधात्रयसंयुतोऽसा-
वष्टाभिरूषणवरैः सह सेवनीयः ॥ ७१ ॥
एकोनत्रिंशदथ रोगगणान्निहन्ति
यक्ष्माणमेव विनिहन्त्यतिशोषमुग्रम्।
नाम्ना मृगाङ्क उदितः सकलामयघ्नः
सेव्यो मुदा धनवता पुरुषेण नित्यम् ॥ ७२ ॥

हेमगर्भपोटलीरसः।

शुद्धं स्वर्णं कर्षमात्रं प्रकुर्यात्तद्वत्सूतं शोधितं मुष्टिमात्रम्।
घृष्ट्वा पिष्टीं कारयेत्खल्वमध्ये गन्धो देयः शाणकाः पञ्चविंशत् ॥
मर्द्यं सर्वं काञ्चनारद्रवेण कृत्वा गोलं निक्षिपेन्मूषिकान्तः।
मुद्रां दत्त्वा शोषयेद्भूधराख्ये यन्त्रे चैनं पाचयेद्वासरान् त्रीन् ७४
शीतं तं वै सर्वमुद्धृत्य दद्याच्छुद्धं गन्धं तत्समं मर्दयेच्च।
आर्द्राचित्रात्स्वे रसे तद्वराटेष्वापूर्यान्ते युक्तितो मुद्रयेच्च॥ ७५॥

कुर्यादेवं टङ्कणं चाष्टमांशं नागं दद्याट्टङ्कणादर्धभागम्।
सेहुण्डोत्थैर्दुग्धकैरेव पिष्ट्वा लिम्पेदेवं तान्वराटांश्च सर्वान् ॥७६॥
पश्चात्सम्यक् चूर्णलिप्तेऽथ भाण्डे दत्त्वा मुद्रां गर्तमध्ये निवेश्य।
पुटं पश्चाज्ज्वालयेन्नागसंज्ञं शीतं कृत्वा चोद्धरेत्तं रसं हि ॥७७॥
पथ्यं ज्ञेयं यादृशं वै मृगाङ्के क्षारं चाम्लं वर्जयेच्च प्रयत्नात् ॥ ७८॥

मात्रा वल्लमिता धृता रसवरेष्वेवं यदा छर्द्यते
छिन्नायाः स्वरसस्तदा मधुयुतः पेयो जलं वा मधु ॥
प्रायः श्लेष्मजरुग्गणेषु सगुडं दद्यात्सदा चार्द्रकं
भृङ्गीचूर्णसुयोजितो मधुयुतो लीढो विरेकापहः ॥७९॥
कासं श्वासयुतं क्षयं ग्रहणिकामग्नेश्च सन्धुक्षणः
पुष्टिं वै कुरुते बलं वितनुते कार्श्यं परं नाशयेत् ॥
हेम्नो गर्भरसो ह्ययं निगदितो व्याधेस्तु विध्वंसको
नाम्ना पोटलिकाभिधो रसवरः प्रोक्तो द्वितीयः खलु ८०

द्वितीयपोटलीरसः।

भागा रसस्य खलु वेदमिताश्च हेम्नः
पिष्टीं विधाय वरगन्धदशद्विभागैः।
खल्वे निधाय किल कज्जलिकां तथैषां
मुक्ताफलान्यपि च षोडशभागकानि ॥ ८१ ॥
तुर्यांशकानपि च शुद्धवराटकांश्च
शङ्खं तथा कलितटङ्कणभागमेकम्।
सर्वं विमर्द्य खलु निम्बुकजै रसैर्वा
गोलं विधाय खलु संपुटके विदध्यात् ॥ ८२ ॥
तन्मुद्रयेल्लवणभस्मवरेण सम्यक्
हस्तप्रमाणकृतगर्तवरे सुपूर्य।
सद्रोमयैर्गजपुटं प्रमितं प्रदद्यात्
तस्याङ्गशीतलगतं च समुद्धरेद्धि ॥ ८३ ॥

पिष्ट्वाऽर्धमाषमिह क्षौद्रघृतेन लिह्या-
देकोनत्रिंशमरिचैः सह राजते वा ।
सद्धेमजे कृतवतेऽप्यथ मृण्मयेऽपि
स श्वासकासक्षयवातकृतेऽतिसारे ॥ ८४ ॥
मन्दानले भवति पोटलिका द्वितीया
सा सर्वरोगशमनाय बुधैः प्रदिष्टा ।

राजमृगाङ्करसः ।

पलैकमानं रसभस्मकं हि स्याद्धेमभस्मप्रभवं पलं च ।
शुद्धस्य वङ्गस्य पलं च तद्वत्तथा च मुक्ता द्विपलं प्रदद्यात् ॥ ८५ ॥
पादांशतष्टङ्कणमेव सम्यक् खल्वे विमर्द्याथ सहाम्लवेतसा ।
तद्भावयेद्वै यवकाञ्जिकेन प्रमर्द्य सर्वं दिनसप्तकेन ॥ ८६ ॥
गोलं विधायाथ विशोषयित्वा मूषागतं तं खलु पाचयेयद्धि ।
शीतं समुद्धृत्य ततो रसेन्द्रं
विचूर्ण्य धार्यः स तु हेमपात्रे ।
हेम्नस्त्वभावे रजतस्य पात्रे नान्यस्य पात्रेषु निवेशनीयः॥८७॥
अयं राजमृगाङ्काख्यो रोगराजस्य घातकः ।
पथ्यं पूर्वोक्तविधिना कारयेन्मतिमाम् भिषक् ॥ ८८ ॥

लोकनाथरसः ।

बुभुक्षितः शुद्धरसो द्विभागस्तथा हि गन्धस्य च भागकौ द्वौ ।
द्वयं समं चूर्ण्य विधाय कज्जलीं सूताद्वराटेषु चतुर्गुणेषु ॥८९॥
निक्षिप्य सर्वं खलु वै वराटे भागैककं टङ्कणकं विमर्द्य ।
दुग्धं प्रदद्यादथ भानुजं वै मुद्रां विदध्यात्किल शोषयेच्च ॥ ९०
यन्त्रे दृढे तं विनिवेश्य यत्नाद्वह्निं चतुर्याममधः प्रकुर्यात् ।
शङ्खस्य खण्डानि पलान्यथाष्टौ तत्संपुटस्यान्तरथो विवस्येत्९१
शरावसन्धिं खलु मुद्रयित्वा हस्तोन्मिते गर्तवरेऽपि धृत्वा ।

पुटं प्रदद्यादथ नागसंज्ञं शीतं समुद्धृत्य ततः प्रयत्नात् ।
पिष्ट्वाऽथ खल्वे खलु सर्वमेवं वल्लद्वयं भक्षितमस्य सम्यक् ॥९२॥
क्षौद्रेण युक्तं विनिहन्त्यशेषादेकोनात्रिंशद्गणरोगजां हि ।
पीडां प्रकाण्डां न च संशयोऽस्ति संसेव्यमानः किल लोकनाथः॥

सूचिकाभरणो रसः ।

शुद्धं विषं पलमितं रसमेकशाणं चूर्णीकृतं तदनु काचशरावलिप्तम्
मुद्रां विधाय सुदृढामपि यामयुग्मं तत्संपुटे कुरु भिषग्वर वह्निमेव

उद्घाट्य संपुटमिदं शनकैः सुलग्न-
धूमं शनैरपि शनैः परिगृह्य यत्नात् ।
संवेशयेत्तदनु काचमये हि पात्रे
सूच्या मुखे लगति तच्च प्रमाणमस्य ॥ ९५ ॥
संमूर्छिते सकलदोषजसंनिपाते
शस्त्राहतं दशमरन्ध्रगतं प्रघर्षेत् ।
रक्तभेषजसंसर्गात् मूर्छितोऽपि हि जीवति ।
तथैव कृष्णसर्पेण दष्टोऽपि न मरिष्यति ॥ ९६ ॥

पञ्चवक्रो रसः ।

सूतं गन्धं कर्षयुग्मप्रमाणं
तत्पादांशां कारयेद्वै शिलाख्याम् ।
व्योषं ताप्यं पिप्पलीं तत्समानां
प्रत्येकं वै भेषजं चूर्णयेच्च ॥ ९७ ॥
भाव्यं पित्तैर्मत्स्यमायूरजैर्वै
घर्मे कृत्वा सप्तवारं हि सम्यक् ।
गुञ्जायुग्मं भक्षितः पञ्चवक्रो
मूर्च्छां हन्यात्संनिपातोद्भवां वै ॥ ९८ ॥

द्वितीयः पञ्चवक्रो रसः ।

सूतं गन्धं टङ्कणं वत्सनाभं कृष्णं कृष्णां कारयेद्वै समांशान् ।
धूर्तद्रावैर्मर्दितं वासरैकं चूर्णं कृत्वा गालितं सूक्ष्मवस्त्रैः ॥९९॥

वल्लं भक्षेत् सन्निपाते सुतीव्रे
सार्कक्वाथं नागरं चानुपानम् ॥ १०० ॥
पथ्यं दध्योदनं कार्यं जलयोगं तु कारयेत्।
कफप्रकोपे सक्षौद्रं सार्द्रं दद्यात्प्रयत्नतः।
अग्निं प्रदीपयत्याशु ज्वरं हन्यात्त्रिदोषजम् ॥ १०१ ॥

उन्मत्तरसः।

सूतं गन्धं मर्दयेद्वासरैकं
धूर्तद्रावैस्तुल्यमस्माच्च व्योषम्।
उन्मत्ताख्यः कथ्यतेऽयं रसो वै
नस्ये दद्यात् संनिपातान्निहन्ति ॥ १०२ ॥

संनिपाताञ्जनरसः।

दन्तीबीजं निस्तुषं चाष्टनिष्कं
कृष्णं कृष्णामूलसूतं त्रिनिष्कम्।
भाव्यं द्रावैः पक्वजम्बीरजैर्वा
सप्ताहं वै मर्दयेत्तत्प्रयत्नात् ॥ १०३ ॥
दत्तो रसश्चाञ्जनेन संनिपातान् निहन्ति वै।
संनिपाताञ्जनरसः कथितः शास्त्रवर्त्मना ॥ १०४ ॥

कनकसुन्दरो रसः।

स्वर्णं कुर्याच्चाष्टमाषप्रमाणं शुद्धं सूतं सूर्यनिष्कप्रमाणम्।
तस्मादभ्रं वेदशाणप्रमाणं शुद्धं शुल्बं युग्मशाणोन्मितं हि १०५
ताप्यं कृत्वा शाणयुग्मप्रमाणं
तद्वद्वङ्गं त्रिःप्रमाणं सुवीरम्।
कुर्याल्लोहादष्टनिष्कान् विशुद्धात्
नागं शुद्धं तोलकं हि प्रसिद्धम् ॥ १०६ ॥
लाङ्गल्याद्यामूलमेकं पलं स्यान्निम्बूतोयैः पेषयेत्तं दिनैकम्।
दद्यादेवं कुक्कुटाख्यं पुटं वै शीतं कृत्वा चूर्णयेत्तच्च सर्वम्१०७

वल्लं देयं सन्निपाते सुतीव्रे
सर्पे दष्टे स्थावरे जङ्गमे वा ।
कुष्ठव्याधिं चाग्निमान्द्यं त्वजीर्णं
नाशं कुर्यादार्द्रकस्यानुपानात् ॥ १०८ ॥

सन्निपातभैरवो रसः ।

सूतं चैकं गन्धकं चेत्त्रिभागं
खल्वे घृष्ट्वा कज्जलीं कारयेच्च ।
तारं ताम्रं वङ्गमेवाभ्रकं हि
लोहं कुर्यात्सर्वमेकैकभागम् ॥ १०९ ॥
वह्निज्वालावक्रवल्ल्यब्दनादाः
शुण्ठी बैल्वं क्वाथयेत्तद्रसैर्वा ।
मर्द्यं यामं यत्नतोऽपि प्रकर्षात्
कृत्वा गोलं वेष्टितं वस्त्रखण्डे ॥ ११० ॥
भाण्डे चार्धं पूरयित्वाऽथ गोलं
स्थाप्यं स्वेद्यं याममेकं हि पश्चात् ।
कृत्वा चूर्णं काचकूप्यां निधाय
वह्निं दद्याद्वालुकाख्ये द्वियामम् ॥ १११ ॥
शुद्धं रक्तं विद्रुमं चूर्णयित्वा
कर्षे कर्षे शाणमात्रं विदध्यात् ।
[1]व्यालस्यैवं कालकूटं द्विवल्लं
प्रत्येकं वै भावितं सूर्यतापे ॥ ११२ ॥
पश्चान्मुस्तावेतसं पिप्पलीं च
मांसीं लोमां हेमवल्लीं च नीलीम् ।
पत्रं चित्रात्कुष्ठकौठेरकं च
रावं यष्टीं देवदालीं मधूकम् ॥ ११३ ॥

---

१ व्यालस्येति 'विषं' इति शेषः । तेन सर्पविषमित्यर्थः ।

मुण्डीं कृष्णां मूसलीं सर्वमेव
कुर्याच्चूर्णं सर्वमेतत्समांशम्।
भाव्यं सम्यक् श्यामधत्तूरजैर्वा
द्रावैरेभिर्भावितं सप्तवारम् ॥ ११४ ॥
चूर्णं कृत्वा वल्लमात्रं प्रदद्यात्
दोषैर्दुष्टे सन्निपाते ज्वरे च।
सर्वोन्मादे भूतदोषे तथोग्रे
देयं सम्यक् सन्निपातान्विहन्यात् ॥ ११५ ॥

पञ्चामृतो रसः।

मृतं सूतं तथा चाभ्रं वङ्गं ताम्रं च कान्तकम्।
मेलितं च समांशेन मर्दयेत्कन्यकाद्रवैः ॥ ११६ ॥
घर्षितं जलयोगेन वटीमेकां च चूर्णयेत्।
भक्षितो वल्लमात्रं हि कृष्णाक्षौद्रेण संयुतः ॥ ११७ ॥
कासश्वासान्निहन्त्याशु तमः सूर्योदये यथा।

वातनाशनो रसः।

सूतं स्वर्णं ताम्रकं वज्रमेव
लोहं ताप्यं तालकं तुत्थकं च।
अब्धेः फेनं शुद्धसौवीरकं हि
कृत्वा सम्यक् सर्वमेवं समांशम् ॥ ११८ ॥
भागं चैकं कारयेद्वै रसोनं
वज्रीक्षीरैर्मर्दितं तद्दिनैकम्।
रुद्ध्वा सम्यग्भूधरे तं विपाच्य
माषं चैकं भक्षयेदार्द्रकेण ॥ ११९ ॥
लिह्यादेवं पिप्पलीमाक्षिकेण
कृष्णामूलक्वाथ अत्रानुपेयः।
सर्वान् वातान् वातजान्वै विकारान्
हन्यात्सत्यं भाषितं भैरवेण ॥ १२० ॥

विरेकीरसः ।

तुल्यं सूतकटङ्कणं पलमितं गन्धात्पलं पिप्पली-
शुण्ठीग्रन्थिकव्योषकान् द्विपलिकान् प्रत्येकभागान् कुरु ।
सर्वैरेव समांशनिस्तुषकृतं दन्तीफलं चूर्णयेत्
गुञ्जैकः सितया समं रसवरः संभक्षितो रेचकृत् ॥१२१॥

इच्छाभेदीरसः ।

शुण्ठीपिप्पलीटङ्कणं सदरदं प्रत्येकमेवाक्षकं
हेमाह्वा पलमात्रकाऽत्र कथिता दन्तीफलं तत्समम् ।
चूर्णीकृत्य समांशकानि सततं गोदुग्धकैर्भावयेत्
वल्लैकः सितया समं रसवरः संभक्षितो रेचकृत् ॥ १२२॥

अग्निरसः ।

सूतं द्विधा गन्धकभागयुग्मं कुर्याच्च खल्वेन तु कज्जलीं हि ।
तस्याः समं तीक्ष्णकचूर्णमेव संमर्दयेत्खलु रसेन च कन्यकायाः
आच्छाद्य पत्रेण रुबूकवेन यामार्धकेनाप्यथ उष्णता भवेत् ।
धान्यस्य राशौ विनिवेश्य सप्त दिनानि संमर्द्य ततो दृढं हि १२४
वस्त्रेण संगाल्य ततो हि यत्नात्तच्चूर्णकं वारितरं हि सत्यम् ।
व्योषं चतुर्जातवरालवङ्गं जातीफलैलं च समांशकानि ॥ १२५
संचूर्ण्य सर्वं समभागतीक्ष्णं क्षौद्रेण लीढं खलु निष्कमात्रम् ।
रसोऽग्निनामा क्षयकासजूर्तीर्विनाशयत्येव न संशयोऽस्ति १२६

अग्निदीपनरसः ।

पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितम् ।
अत्र जातीफलमर्धभागिकं तिन्तिडीकरसकेन मर्दितम् ।
माषमात्रमनुपानमार्द्रकं सद्य एष जठराग्निदीपनः ॥ १२७

वह्निसूतो रसः ।

भागौ द्वौ वरशङ्खकस्य कथितौ दग्धावराटास्तथा
गन्धस्यैव तु चार्धभागसहितः सूतस्तथा योजितः ।

कृष्णाभागयुतं विचूर्ण्य सकलं सद्वत्सनाभात्रयो
भागा निम्बुरसैर्विमर्द्य सकलं संसेवितं चाग्निकृत् ॥ १२८ ॥

सूर्यावर्तो रसः।

सूतं चैकं गन्धकं चार्धभागं कन्याद्रावैर्मर्दयेद्याममेकम्।
कल्केनानेनैव शुल्बस्य पत्रं लिप्तं पश्चात्पाचितं भाण्डमध्ये१२९
यामद्वन्द्वं स्वेदितं शीतलं वै गुञ्जामात्रं भक्षितं हन्ति शोफम्।
कासं श्वासं जूर्तियुक्तं निहन्यात्सूर्यावर्तः सम्यगेव प्रसिद्धः१३०

स्वच्छन्दभैरवरसः।

सूतं गन्धं ताप्यकं तालकं वै निर्गुण्डीवह्नित्र्यूषणं चाग्निमन्थम्।
पथ्योपेतं शाणमात्रं पृथक् स्यात् खल्वे पिष्ट्वा बीजपूरद्रवेण१३१
चूर्णं कृत्वा भक्षयेन्माषमात्रं कृष्णासर्पिःक्षौद्रयुक्तं प्रलीढम्।
सर्वान् हन्याच्चातिसारान् सुघोरानामं वह्नेर्मान्द्यतां चापि सद्यः

त्रिविक्रमरसः।

छागीदुग्धे ताम्रपत्रं विपाच्यं तत्ताम्रं वै सूतगन्धेन तुल्यम्।
कृष्णं चूर्णं सिन्दुवारेण घृष्टं गोलं कृत्वा याममात्रं पचेत्तम्१३३
यन्त्रे पाच्यं वालुकाख्ये च सम्यक् शीतं कृत्वा भक्षितं गुञ्जयुग्मं
क्वाथश्चास्मिन् बीजपूरस्य पेयो मासेनैकेनाश्मरी नाशमेति१३४
नाम्नाऽयं त्रैविक्रमेण प्रसिद्धो वृद्धौ कृच्छ्रे विद्रधौ चाश्मरीषु।

तालकेश्वररसः।

तालमाक्षिकमनःशिलाः समाः शुद्धसूतमथ टङ्कणं तथा १३५
चूर्णयेच्च रसतो द्विगन्धकं गन्धतुल्यमथ ताम्रभस्मकम्।
लोहभस्म पलतुर्यकं तथा मर्दयेच्च पलपञ्चकै रसैः ॥ १३६ ॥
चुक्रजैश्च विनिवेश्य संपुटे दापयेच्च पुटमत्र कुक्कुटम्।
मर्दयेच्च पुनरेव तद्रसैर्निक्षिपेच्च मृतलोहशुल्बकम् ॥ १३७ ॥
वेदयुग्मपलमात्रकं क्रमात्त्रिंशदंशविषमत्र योजयेत्।
माहिषाज्यमधुमिश्रितं सदा सेवयेच्च किल वल्लपञ्चकम्॥१३८

सोमराजिफलचूर्णकर्षकं सर्पिषा मधुयुतं लिहेदनु ।
तालकेश्वररसः सदा बुधैः कथ्यते सकलकुष्ठहा खलु ॥१३९॥

कुष्ठकुठाररसः ।

सूतभस्मसमं गन्धं मृतायस्ताम्रगुग्गुलु ।
त्रिफला निम्बशुण्ठ्यौ च चित्रकश्च शिलाजतु ॥ १४० ॥
इत्येवं चूर्णितं कुर्यात्प्रत्येकं निष्कषोडशम् ।
चतुःषष्टिमितान् बीजान् करञ्जात्तु प्रदापयेत् ॥ १४१ ॥
चतुःषष्टिमितं चाभ्रं मध्वाज्याभ्यां विलोडयेत् ।
स्निग्धभाण्डगतं खादेद्द्विनिष्कं सर्वकुष्ठजित् ॥ १४२ ॥

कुष्ठघ्नरसः ।

शुद्धं सूतं गन्धकं वै द्विभागं कन्यानीरैर्मर्दयेद्वासरैकम् ।
शुद्धं लोहं मारितं भागमेकं गोलं कृत्वा लोहपात्रे निधाय१४३
किञ्चित्किञ्चिद्द्रोजलं तत्र सिञ्चेच्चुल्यामग्निं यामयुग्मं शनैश्च ।
तीव्राग्निं वै कारयेद्याममर्धं स्वाङ्गं शीतं चूर्णयेत्तत्प्रयत्नात् १४४
वह्निः काष्ठोदुम्बरी सोमराजी श्रेष्ठा तद्वद्राजवृक्षो विडङ्गम् ।
लेहं कृत्वा लेपयेद्दुष्टकुष्ठं गुञ्जायुग्मं भक्षयेद्वै रसं च ॥ १४५॥
दद्रूकुष्ठं श्वेतकुष्ठं विचर्चीं सत्यं सत्यं नाशयेत्त्वग्गदांश्च ।

सूर्यभक्तो रसः ।

कर्तव्यं वै बाकुचीशुद्धचूर्णं क्वाथेनापि भावितं खादिरेण १४६
प्रातःकाले भक्षितं वै त्रिशाणं पेयं क्षीरं गोघृतं चानुपाने ।
कुष्ठस्थाने स्फोटकाः संभवन्ति सप्ताहाद्वै निश्चितं श्वित्रकुष्ठे१४७
नीलीं गुञ्जां हंसपादीं कसीसं धत्तूरं वै सूर्यभक्तां तथा च ।
तुल्यान्येवं लेपयेत्स्फोटकानां शान्त्यर्थं वै मानवः सप्तरात्रात्॥
श्वित्रं कुष्ठं नाशमायाति सम्यक् नाम्ना चैवं सूर्यभक्तो रसो हि

श्वित्रे लेपः ।

गुञ्जामूलं वह्निमूलं बलाया मूलं चाम्लैर्घर्षितान्येव सम्यक् ।
श्वित्राण्याशु नाशयन्तीह लेपात् सूर्यज्योत्स्ना ह्यन्धकारं यथा हि ।

सर्वेश्वरो रसः।

सूताच्चैको वेदभागा बलेःस्युःखल्वे यामं मर्दयेन्निम्बुनीरैः १५०
अभ्रं ताम्रं लोहकं हिङ्गुलं च प्रत्येकं वै कारयेच्चाम्रमात्रम्।
स्वर्णं ताप्यं रूप्यकं बिल्वमेकं माषैकं वै मारितं वज्रचूर्णम् ॥१५१
तालं शुद्धं कारयेन्मुष्टियुग्मं मर्द्यं वासावारिणा वासरैकम्।
धूर्तेणैवं वत्सनाभेन भाव्यमर्कक्षीरेणाथ जम्बीरजेन ॥ १५२॥
वज्रीक्षीरैर्मर्द्य वाजीविषेण कृत्वा गोलं वाससा वेष्टयित्वा।
सिक्तायन्त्रे[1] स्वेद्यमेतद्दिनैकं पश्चादेनं चूर्णयेच्छ्लक्ष्णकं हि ॥१५३
नागं शुद्धं योजयेन्मुष्टिमात्रं कृष्णाचूर्णं मुष्टिमात्रं प्रदद्यात्।
गुञ्जायुग्मं भक्षयेन्माक्षिकेण सुप्तिं कुष्ठं मण्डलं नाशयेच्च॥१५४॥

बाकुची देवकाष्ठं च कर्षमात्रं सुचूर्णयेत्।
लिहेदेरण्डतैलेन ह्यनुपानं सुखावहम् ॥ १५५ ॥

स्वर्णक्षीरीरसः।

हेमाह्वापलपञ्चकं तु घटके तक्रे पचेद्वह्निना
जीर्णे तक्रघटे पुनः खलु घटे क्षीरे तथैवं पचेत्।
जीर्णे क्षीरघटे विशोष्य विधिवत्संचारयेद्यत्नत-
श्चूर्णं पञ्चपलं हि वस्त्रगलितं कृत्वाऽथ संयोजयेत् ॥१५६
कृष्णां हि द्विपलां सुमूर्च्छितरसे त्वेकीकृतां भक्षये-
न्निष्कैकं मधुमिश्रितं घृतयुतं कुष्ठार्तिहृत्सर्वदा।
हेमाह्वः खलु कीर्तितो रसवरः सेव्यः सदा रोगिभिः
कुष्ठव्याधिविनाशनः सुखकरः कान्तिप्रदः कामिनाम् १५७

मेहबद्धरसः।

भस्मसूतमृतकान्तलोहकं माक्षिकं च कुनटीं शिलाजतु।
व्योषमेव त्रिफलां कपित्थकं रात्रियुग्ममथ कुष्ठबीजकम्॥१५८
भृङ्गराजरसकेन भावयेदेकविंशतिदिनानि वै बुधः।
निष्कमात्रमथ माक्षिकेण वै लेहितः सकलरोगहृत्सदा॥१५९॥

---

१. सिक्तायन्त्रे इति सिकतायन्त्रे, वालुकायन्त्रे इत्यर्थः

मेहबद्धरस एष वै बुधाः सर्वमेहहरणो मयोदितः ॥१६०॥
महानिम्बस्य बीजानि पिष्ट्वा षट्संमितानि च।
पलतन्दुलतोयेन घृतनिष्कद्वयेन च।
एकीकृत्य पिबेच्चानु हन्ति मेहं चिरन्तनम् ॥ १६१ ॥

महावह्निरसः।

चत्वारः सूतभागास्तदनु बलिवसा चाष्टभागा विधेया
गौरीश्रेष्ठाशिवानां कथितमिदमहो त्रित्रिभागं क्रमेण।
स्नुग्दुग्धेन भृङ्गकैर्वारुबुजफलरसैर्भावयेत्सप्तवारं
पश्चात्कृत्वाऽथ चूर्णं मधुसहितमिदं मूढवातोदरेषु ॥१६२॥
(एकीकृत्य विचूर्णयेच्च सकलं स्नुग्वह्निभृङ्गद्रवै-
र्भाव्यं सप्तदिनावधि क्रमगतं वातारितैलेन वै)।
एषः स्याद्धि महाग्निनाम रसराट् पथ्ये जलं शीतलं
वर्ज्यं क्षारमथाम्लकं शमयते संमूढवातं खलु ॥ १६३ ॥

विद्याधररसः।

तालं ताप्यं च गन्धं रविमथ च शिलां सूतकं चेत्समांशं
खल्वे संमर्दितं वै तदनु वरकणाक्काथकेनाथ भाव्यम्।
वज्रीक्षीरेण सम्यक्किल सकलमिदं चूर्णितं वस्त्रपूतं
निष्कार्धं भक्षयेद्वै जठरकृतगदान् हन्ति विद्याधरोऽयम् १६४

त्रिनेत्ररसः।

स्वर्णं टङ्कणमेव हारिणभवं शृङ्गं तथा शुल्वकं
सूतं वै समभागकं दिनमहो मर्द्यं रसैश्चार्द्रजैः।
खल्वे मर्द्य च वेष्टितं दृढपटे गोलं पुटेद्वह्निना
योगोऽयं गुदकीलहा निगदितो मध्वाज्यकैः सेवितः ॥

शूलगजकेशरीरसः।

शुद्धं सूतं गन्धकं चेति भागमेकं यामं मर्दयेद्वै दृढं हि।
शुद्धं ताम्रं चोभयोर्वै समांशं खल्वे घृष्ट्वा गोलकं तद्विधेयम् १६६

तद्गोलं वै धारितं संपुटे हि सामुद्राख्ये यन्त्रके सन्निधेयम्।
दत्त्वा मुद्रां भाण्डवक्त्रं निरुध्य गर्तं कृत्वा छाणकैः पूरितं हि१६७
अग्निं कृत्वा नागसंज्ञं पुटं हि दत्त्वा शीतं चोद्धरेत्तं प्रयत्नात्।
सूक्ष्मं चूर्णं पर्णखण्डे द्विगुञ्जं शूलान्यष्टौ नाशयेद्भक्षितं हि।
हिङ्गुं शुण्ठीं जीरकं चोषणं वै चूर्णं कृत्वा पाययेदुष्णतोयैः॥१६८

अग्नितुण्डावटी।

सूतं समं गन्धकवत्सनाभं यवानिकां चैव फलत्रिकं च।
क्षारद्वयं चित्रकसिन्धुजीरकं सामुद्रकं त्र्यूषणमेव रुच्यम्॥१६९॥
समं प्रकुर्याद्विषमुष्टिमेभिर्जम्बीरनीरेण विमर्दयेच्च।
वटीं च भक्षेदथ चाग्निमान्द्ये तथा ह्यजीर्णेऽथ विषूचिकायाम्॥

अजीर्णकण्टको रसः।

शुद्धं सूतं विडं गन्धं समं सर्वं विचूर्णयेत्।
मरिचं सर्वतुल्यांशं कण्टकार्याः फलद्रवैः॥ १७१॥
मर्दयेद्भावयेदेवमेकविंशतिवारकम्।
वल्लमात्रां गुटीं खादेत्सर्वाजीर्णप्रशान्तये।
अजीर्णकण्टकः सोऽयं रसो हन्ति विषूचिकाम्॥ १७२॥

मन्थानभैरवरसः।

सूतं ताम्रं हिङ्गु वाट्याह्वयं च गन्धं तालं सैन्धवं तिक्तकं वै।
तुल्यं सर्वं देवदालीरसेन निर्गुण्ड्या वा मेघनादाद्रसैर्वा॥१७३॥
कोशातक्या मर्दयेद्वासरैकं चूर्णं कृत्वा भक्षयेन्माषमात्रम्।
क्षौद्रैर्युक्तं नाशयेच्छ्लेष्मरोगान् निम्बक्वाथं चानुपाने पिबेद्धि१७४

सूर्यावर्तो रसः।

सूतस्यार्धं गन्धकं चैव मर्द्यं यामं चैकं कन्यकाया द्रवेण।
चूर्णं कृत्वा ताम्रपात्रं विशुद्धं कल्कैरेभिर्लेपयेत्पाचयेच्च॥१७५॥
भाण्डे यन्त्रे वासरैकं प्रयत्नाच्छीतं कृत्वा चूर्णितं भक्षयेच्च।
गुञ्जायुग्मं श्वासकासाग्निमान्द्ये सूर्यावर्तः कथ्यते नामतोऽयम्॥

हेमादिपर्पटीरसः।

भागमेकमिह सूतभस्मनो भागयुग्ममपि गन्धकस्य च।
सूतमानमपि हेमभस्मकं तारभस्म अपि चाभ्रसत्वकम् ॥१७७॥
लोहभस्म अथ चार्कजं क्षिपेल्लोहपात्रजठरे प्रपाचयेत्।
द्राव्यता भवति तत्र वै यदा निक्षिपेच्च कदलीदले तदा ॥१७८
आटरूषसुरसाजयन्तिकामुण्डिकात्रिफलकार्द्रभृङ्गिका-
मेघनादकटुकन्यकारसैः प्रत्यहं तु परिमर्दयेद्दृढम् ॥ १७९ ॥
वत्सनाभजरसैर्दिनत्रयं लोहपात्रनिहितं पचेत्क्षणम्।
जायते हि वरपर्पटीरसः शृङ्गवेरकरसेन योजयेत् ॥ १८० ॥
वल्लयुग्ममितमानतस्त्वयं श्वासकासविनिवृत्तिदायकः।
पिप्पलीभिरनुपाययेत्तथा काथमत्र सुरसाटरूषजम् ॥ १८१ ॥

अग्निकुमाररसः।

सूतं चैकं गन्धकं च त्रिभागं नागं वङ्गं शुल्बतारं च हेम।
अभ्रं लोहं तारमाक्षीकवज्रमेकैकं वै शोधयित्वा प्रदेयम् १८२
मुण्डीश्वेताकाकमाच्यश्वगन्धानिर्गुण्ड्यो वै भृङ्गराजेन युक्ताः।
रसैरेषां वासरान् त्रीन् प्रमर्द्यात्खल्वे सम्यग्गोलकं कारयेद्धि ॥
ततो घर्मे शोषयेत्तं च गोलं लेपाः सम्यक् पञ्च मृद्भिः प्रदेयाः।
भाण्डं चार्धं पूरयेद्वालुकाभिर्मध्ये गोलं निक्षिपेन्मुद्रयेच्च॥१८४
अग्निं कुर्याद्यामषष्ठ्यष्टमात्रं शीते सिद्धो जायते वै रसोऽयम्।
कृष्णाकाथैर्भावनाः पञ्च देया आर्द्रेणैवं भावयेत्पञ्चवारान्॥१८५
ज्वालामुख्याः स्वै रसैः सप्तवारं भाव्यं चापि सूर्यवारं हि वह्नेः।
निर्गुण्ड्या वै भावना भानुमात्राः पश्चात्कार्या वल्लमात्रा वटी हि॥
देया सद्भिः पञ्चमांशा हि कृष्णा तद्वच्छुण्ठी चूर्णिता तत्प्रमाणा।
कासे श्वासे मूत्रकृच्छ्रे ग्रहण्यामर्शोशोफे चाश्मरीमेदरोगे॥१८७
मन्दे ह्यग्नौ वातरोगेऽथ शूलेऽपसारे वै सन्निपाते बलासे।
सेव्यो वल्लं चार्द्रकेणापि सम्यक् क्षारं चाम्लं वर्जयेच्चापिपथ्ये१८८

अग्निप्रदो रसः।

कर्षौ द्वौ रसगन्धयोस्तु समयोः संमर्द्य व्यालस्य वै
कर्षैकेन विषेण कज्जलनिभं काचस्य कूप्यां क्षिपेत्।
लिप्त्वा कर्पटमृत्स्नया सुविधिना संपाच्य यामाष्टकं
ज्ञात्वा शीतलमत्र विधिना मर्द्यं द्विकर्षोषणैः॥
भक्षेद्रक्तिकमिक्षुशर्करयुतं नाम्ना रसोऽग्निप्रदो
मन्दाग्निक्षयसन्निपातमरुतां नाशाय चायं वरः॥ १८९॥

त्रिभुवनकीर्तिरसः।

शुद्धस्य ताम्रस्य दलानि कुर्यात्पलानि त्रीण्येव च गन्धकस्य।
पलद्वयं वै रुचकस्य चैकं पलं रसस्यापि विमर्द्य खल्वे॥१९०॥
चूर्णं विधायाप्यथ सिन्दुवाररसेन पत्राणि विलेपयेच्च।
तत्संपुटस्यान्तरतो निधाय विमुद्र्य तत्संपुटमेव वह्नौ॥ १९१॥
यामं तथैकं पुटयेच्च गोमयैर्जातं सुशीतं हि विचूर्णयेत्तत्।
तन्नागवल्लीदलमध्यतोऽपि वल्लैकमात्रं सकलोदरघ्नम्॥ १९२॥

स्थौल्यापकर्षणो रसः।

सूतबोलमृततालताम्रकं चार्कदुग्धरसकेन मर्दितम्।
क्षौद्रयुक्तमपि वल्लमात्रकं भक्षितं च ह्यतिबृंहितं जयेत्॥१९३॥
तोयमेकपलमत्र मात्रया पानतोऽप्यखिलमेहहारकम्।

वातमेहान्तको रसः।

सूतभस्म अपि वङ्गभस्मकं मर्दितं हि दिवसं जयारसे॥१९४॥
लेहितं च मधुना दिनत्रयं वातमेहविकृतिं प्रणाशयेत्।

प्रमेहाङ्कुशरसः।

हेमबीजविषवङ्गसूतकं बलिवसाऽप्यथ चाभ्रभस्मकम्॥ १९५॥
नागवल्लिजरसेन मर्दितं कामदं सकलमेहजित्तथा।

मेहारिरसः।

टङ्कणं च रसराजगन्धकं सीसकं च रसकेन संयुतम्॥१९६॥
नागवल्लिजरसेन मर्दितं सर्वमेहकृतरोगनाशनम्॥ १९७॥

स्थूलराजगजकेसरीरसः ।

रसेन्द्रं रजतं तार्प्यं गगनं ताम्रलोहकम् ।
स्वर्णं च क्रमवृद्धानि मर्दयेत्पूरवारिणा ॥ १९८ ॥
अन्येन चाम्लवर्गेण मर्दयेत्सप्तवासरान् ।
काचकूप्यां निधायाथ पचेद्यामाष्टकद्वयम् ॥ १९९ ॥
स्वाङ्गशीतलतां ज्ञात्वा गृह्णीयात्तं च मर्दयेत् ।
आर्द्रकस्वरसेनैव द्रोणपुष्पीरसेन च ॥ २०० ॥
बृहत्याः पत्रतोयेन बीजतोयेन वा पुनः ।
प्रत्येकं दिनमेकं हि भावनां दापयेत्क्रमात् ।
पिप्पलीमधुना सार्धं चैतद्गुञ्जाद्वयं भजेत् ॥ २०१ ॥
स्थूलदुर्दिनविनाशने मरुत् स्थूलपर्वतविनाशने हरिः ।
स्थूलदोषरसशोषणक्षमः स्थूलराजगजकेसरीरसः ॥ २०२ ॥

सिद्धपञ्चाननरसः ।

सूतं गन्धं टङ्कणं चेत्समांशं व्योषं मुस्तं वत्सनाभं वरा च ।
सर्वेभ्योवै निष्कमात्रं गुडेन खादेद्गुञ्जायुग्ममात्रां वटीं हि ॥२०३

कुष्ठान् मेहान् शोफशूलादिदोषान्
हन्तीत्येवं सिद्धपञ्चाननोऽयम् ।

शीतारिरसः ।

एकं रसं गन्धकमेव शुद्धं द्विभागमुक्तं च विमर्द्य खल्वे ॥ २०४ ॥
पक्वार्कपत्रोत्थरसेन यत्नात्पुनर्नवावह्रिरसैश्च पाचयेत् ।
तस्यार्धभागेन विषं प्रदत्त्वा चूर्णीकृतं वल्लमितं लिहेच्च ॥२०५॥
शीतारि नामा च रसोत्तमोऽयं शीतस्य वातस्य निवारणाय ।

कुमुदेश्वरो रसः ।

सूतभस्म समहेमभस्मकं मौक्तिकं च रसपादटङ्कणम् ॥ २०६ ॥
गन्धमत्र कुरु सर्वतुल्यकं चूर्णितं तुषजलेन गोलकम् ।
लेपयेन्मृदुमृदा विशोषितं पाचितं सिकतयन्त्रमध्यतः ॥२०७॥

वासरैकमथ शीतलीकृतश्चूर्णितो मरिचमाक्षिकैः प्लुतः ।
भक्षितो हि कुमुदेश्वरो रसो राजयक्ष्मपरिशान्तिकारकः ॥२०८॥

यक्ष्महरो रसः ।

शुद्धसूतविषके च हाटकं गन्धकेन सहितं समांशकम् ।
मर्द्य चार्द्रकरसेन चित्रकैः प्रक्षिपेच्च सुदृढे सुभाजने ॥२०९॥
ताम्रभाजनमथोपरिस्थितं रोधयेत्पटमृदा सदैव हि ।
याममात्रपुटितं शनैः शनैर्निक्षिपेच्च जलमूर्ध्वभाजने ॥२१०॥
ताम्रपात्रकुहरे रसो भवेद्रोगराजविनिबर्हणक्षमः ।

पूर्णचन्द्ररसः ।

स्वर्णं सूतं शुद्धमेतद्द्विशाणं युक्तं नागं गन्धकं चेत्समांशम् ॥२११
वह्नेस्तोयैस्तच्च पेष्यं प्रयत्नाद्गोलं कृत्वा वेष्टयेत्तं मृदा च ।
भाण्डं चार्धं पूर्य सामुद्रकेण गोलं धृत्वा छादितं त्र्यङ्गुलेन॥२१२
लिम्पेद्भाण्डं गोमयेनापि सम्यक् वह्निं कृत्वा याममेकं तृणैश्च ।
पूर्णश्चन्द्रः कीर्तितोऽयं रसो हि यक्ष्मारोगान्नाशयत्येव सम्यक् ॥
सर्वान् वातान् श्लेष्मरोगान् यथा वै पूर्णश्चन्द्रो नाशयत्यन्धकारम्

स्वर्णपत्ररसः ।

नागं सूतं गन्धकं वत्सनाभं रसैर्मर्द्यं कन्यकाया दिनैकम् ॥२१४
गोलं कृत्वा निक्षिपेद्भाण्डमध्ये संछाद्यं वै श्रावकेनापि सम्यक् ।
मुद्रां दत्त्वा भूतिसामुद्रकेण यामं चैकं मन्दवह्नौ विपाच्य २१५
वल्लं चैकं भक्षितं क्षौद्रयुक्तं यक्ष्मारोगं नाशयेद्धि प्रसह्य ।

सर्वसुन्दरो रसः ।

सूतगन्धविषमेव कारयेद्भागवृद्धमथ मर्दयेत्ततः ॥ २१६ ॥
आर्द्रवह्निजरसेन यत्नतः पाचितो हि लवणाख्ययन्त्रके ।
भक्षितो हि किल वल्लमात्रया क्षौद्रकेण सह पिप्पलीयुतः ।
पूर्णचन्द्रवदयं हि सेवितो यक्ष्महा भवति वातरोगहा ॥२१७॥

त्रिदोषशमनो रसः ।

स्वर्णं सूतं तथा गन्धं मर्दयेत्कन्यकाद्रवैः ।

पश्चाद्गोलं विधायाथ शरावसंपुटे पचेत् ॥ २१८ ॥
स्वाङ्गशीतं समुद्धृत्य चूर्णं कृत्वा प्रयत्नतः ।
भक्षयेद्वल्लमात्रं तु त्रिदोषजरुजं जयेत् ॥ २१९ ॥

पित्तकृन्तनो रसः ।

सूतकं च मृततारभस्मकं गन्धकेन सहितं समांशकम् ।
मर्दितं हि खलु भृङ्गवारिणा चार्धयाममपि कुक्कुटे पुटे ॥ २२० ॥
पाचितं हि सकलं विचूर्णितं लेहितं हि मधुशर्करायुतम् ।
पित्तदोषशमनं मयोदितं पित्तकृन्तनमिदं प्रशस्यते ॥ २२१ ॥

श्लेष्मकुठाररसः ।

पारदं च मृतशुल्बगन्धकं नागवल्लिजरसेन पेषितम् ।
पाचितं च मृदुवह्निना घटीयुग्ममेतदखिलं विचूर्णितम् ॥२२२
भक्षितं च गुडमिश्रमार्द्रकैः श्लेष्मदोषविनिवृत्तिदायकम् ।

मेहनाशनरसः ।

लोहभस्म रसभस्म ताप्यकं गन्धकेन सहितं समांशकम् ॥२२३
वत्सबीजकरसेन भावितं लेहितं सकलमेहनाशनम् ।

मेहाङ्कुशरसः ।

वङ्गभस्म रसभस्म गन्धकं धातकीस्वरसकेन मर्दितम् ॥ २२४ ॥
लेहितं मधुयुतं हि मेहजिद्वल्लयुग्ममतिसारनाशनम् ।

मृत्युञ्जयरसः ।

वज्रभस्म रसभस्म मौक्तिकं मर्दितं च खलु निम्बुवारिणा २२५
तच्च कुक्कुटपुटेन पाचितं चूर्णयेन्मधुयुतं हि वल्लकम् ।
वर्षमात्रमपि सेवितं जयेन्मृत्युमेव सकला रुजा अपि ॥२२६॥

विरेचनी गुटिका ।

पारदं गन्धकं विश्वा टङ्कणं विषमुष्टिकम् ।
स्वर्जिका मरिचं कृष्णा समभागानि कारयेत् ॥ २२७ ॥
विडङ्गं चाभया दन्ती त्रिवृन्नेपालकं तथा ।
पूर्वचूर्णसमान्येव भृङ्गद्रावेण भावयेत् ॥ २२८ ॥

गुञ्जाप्रमाणवटिका भक्षिता शीतवारिणा
विरेचयत्यवश्यं हि क्रमीरोगान् ज्वरानपि ।
विनाशयति वै सम्यक् सत्यं गुरुवचो यथा ॥ २२९ ॥

अमरकलानिधिरसः ।

मुक्ताफलं विद्रुमकं रसेन्द्रं गन्धं समांशानि ततो विदध्यात् ।
तद्बीजपूरस्य रसेन मर्दितं गोलं हि कृत्वा वसनेन वेष्टयेत्२३०
मृदा सुलिप्तं परिशोषितं च तच्छ्रावके संपुटयेच्च वह्नौ ।
चूर्णीकृतं वल्लमितं च भक्षितं स्याद्रोगराजस्य निकृन्तनं हि ॥

भास्कररसः ।

तालं तार्प्यं गन्धकं सूतकं च शिलाह्वं वै खेचरं चेत्समं हि ।
चूर्णं कृत्वा चाटरूषेण मर्द्यं सार्द्रेणैवं सौरसाया रसेन ॥२३२॥
मर्दितं हि तदनु ताम्रनिर्मिते धारयेच्च सकलं हि संपुटे ।
मृत्स्नया च परिवेष्ट्य संपुटं पाचयेच्च सततं दृढाग्निना ॥२३३॥
यामयुग्ममितमेव मात्रया यन्त्रके हि कुरु शीतलं स्वयम् ।
जायतेऽतिरुचिरो महारसो पूर्ववद्भवति भास्करोदयः ॥२३४॥
चित्रकार्द्रकरसेन योजितो राजयक्ष्मकफवातनाशनः ।

कामदेवरसः ।

तारं वज्रं स्वर्णताम्रं च सूतं लोहं गन्धं भागयुग्मं प्रकुर्यात् ॥२३५
कन्याद्रावैर्मर्दयेदेकयामं चूर्णं कृत्वा काचकूप्यां निवेश्य ।
कूपीं चापि पूरयेत्सिन्धुचूर्णैर्मुद्रां दत्त्वा शोषयेत्तत्प्रयत्नात् ॥
वह्निं कुर्याद्वासरैकं प्रयत्नात् शीतं जातं खल्वमध्ये विचूर्ण्य ।
अर्कक्षीरेणाथ भाव्यं हि सर्वं कासस्यैवं पद्मकन्दस्य नीरैः२३७
मौशल्या वै गोक्षुरस्य द्रवेण त्रिस्त्रिर्वेलां भावनां च प्रदद्यात् ।
काकोल्या वै वाजिगन्धाशताह्वादुःस्पर्शाणां वै स्वै रसैर्भावयेच्च
चूर्णं कृत्वा मिश्रयेद्व्योषचूर्णं कर्पूरं वै कुङ्कुमैलालवङ्गम् ।
कस्तूरीं वै पूर्वचूर्णात्षडंशां कार्या सर्वैः शर्करा वै समा च२३९
भक्षेच्चैनं निष्कमात्रं प्रयत्नाद्गोक्षीरं वै चानुपाने विधेयम् ।

मिष्टाहारं सेवयेच्चैव नाम्लमोजस्तेजो वर्धते वै बलं च॥२४०॥
सौन्दर्यं वै जायते सुन्दरीणां वृद्धिः कामे नैव हानिश्च वीर्ये ।
तस्मात्सेव्यः कामदेवो रसोऽयं वृष्येषूक्तो योग एषो वरिष्ठः ॥

कन्दर्पसुन्दरो रसः ।

सूतं वज्रं नागमुक्ताफलं च तारं स्वर्णं चाभ्रकं तीक्ष्णवङ्गौ ।
प्रत्येकं वै कर्षयुग्मप्रमाणं मर्द्यं सर्वं वाजिगन्धारसेन ॥२४२॥
क्षिप्त्वा शृङ्गे हारिणे वै प्रयत्नात्पक्त्वा शृङ्गं कोमलेनाग्निना वै ।
भाव्यं पश्चात्ताम्रपुष्पीरसेन द्राक्षावंश्यायष्टिकानां शृतैश्च २४३
भद्रौदन्या वर्षपुष्याः कसेरोर्गाङ्गेरुक्या भावयेच्चापि नीरैः ।
सर्वासां वै भावयित्वा रसैश्च चूर्णं कृत्वा शोषयित्वा च सम्यक्
एला पत्रं त्वग्लवङ्गागुरू च वंश्या मुस्ता केसरं चैव कृष्णा ।
कस्तूरी चेद्वल्लकं वै घनाच्च पूर्वे चूर्णे मिश्रयेदष्टमांशम् ॥२४५
एतच्चूर्णं शाणमात्रं प्रगृह्य रात्रौ खादेदक्षयं वीर्यमिच्छन् ।
धात्र्याश्चूर्णं कारयेद्वै विदार्याश्चूर्णं कृत्वा कर्षमात्रं च सर्पिः॥२४६
तुल्यं भक्षेच्चानुपानप्रयोगे क्षीरं पेयं साधितं माहिषं वै ।

राजमृगाङ्को रसः ।

भागत्रयं पारदमेव कुर्याद्भागोऽथ हेम्नश्च तथाऽभ्रकस्य॥२४७॥
मनःशिलागन्धकतालकेभ्यो भागद्वयं सर्वमथो विचूर्ण्य ।
संपूर्य तेनैव वराटकानि मुद्रां च कुर्यादथ टङ्कणेन ॥ २४८ ॥
दुग्धेन चाजेन विमुद्रितानि मृद्भाण्डमध्येऽथ विधारयेच्च ।
वाराहनाम्ना पुटकेन पक्त्वा तत्स्वाङ्गशीतं हि विचूर्णयेच्च २४९
भक्षेत्त्रिगुञ्जं खलु पिप्पलीभिः क्षौद्रेण सार्धं सकलामयघ्नः ।

अमृतसुन्दरो रसः ।

मनःशिलामाक्षिकतालगन्धं सूतं तथा खर्परमेव तुल्यम्॥२५०
संमर्दितं चार्द्ररसेन सम्यग्वासारसैश्चेत्सुरसारसेन ।
आपूरितं ताम्रजपात्रमध्ये तत्संपुटं वै त्रिदिनं प्रपाचयेत्॥२५१

तं स्वाङ्गशीतं हि समुद्धरेद्वै वल्लोन्मितं तं परिभक्षयेच्च ।
वातोद्भवान् हन्ति समस्तरोगान् तथा च श्लेष्मोद्भवरोगसंघान् ॥

खेचरीगुटिका ।

रसकं दरदं ताप्यं गगनं कुनटीसमम् ।
सूतं समांशकं दद्यादम्लवेतसजै रसैः ॥ २५३ ॥
मर्दयेद्दिनमेकं तु सूर्यघर्मे शिलातले ।
पचेत्तं वालुकायन्त्रे दिनमेकं रसं खलु ॥ २५४ ॥
स्वाङ्गशीतं समुद्धृत्य चूर्णीकृत्य प्रयत्नतः ।
निम्बूरसेन गुटिका कर्तव्या चाढकीसमा ॥ २५५ ॥
सर्वज्वरहरा प्रोक्ता गुल्मोदरविनाशिनी ।
गुटिका खेचरी प्रोक्ता देहलोहविधायिनी ॥ २५६ ॥

अमरसुन्दरो रसः ।

सूतभस्म दरदं विशोधितं तालसत्त्वमिति चैकभागिकम् ।
गन्धकं च सममत्र मर्दितं भृङ्गराजरसकेन संयुतम् ॥ २५७ ॥
काकमाचिजरसैश्च मर्दितं कुक्कुटाख्यपुटपञ्चकेन हि ।
पाचितं हि सितया समं सदा सेवितं सकलरोगघातकम् ॥ २५८ ॥

तालकराजरसः ।

वङ्गं चाभ्रं शोधितं तालकं हि सूतं शुद्धं वत्सनाभं तथैव ।
सौवीरं चेट्टङ्कणं चैव व्योषं वङ्गं युग्मं भागमत्रैव कुर्यात् ॥ २५९ ॥
अभ्रं कुर्यात्त्रीणि भागानि सम्यक् सूतं चैकं तालकं वै त्रिभागम् ।
नागं चैकं टङ्कणं वेदभागं सौवीराद्वौ कल्पनीयौ हि भागौ ॥
खल्वे मर्द्यं सर्वमेकत्र वज्रिक्षीरे चार्के वासरैकं प्रयत्नात् ।
पश्चात्क्षेप्यं काचकूप्यां हि सर्वं कूपीवक्त्रं ताम्रपत्रेण रुन्ध्यात् २६१
मुद्रां कृत्वा पाच्य यामाष्टयुग्मं शीतं कृत्वा पूर्ववन्मर्दनीयम् ।
एवं कुर्यात्त्रीणि वाराणि शुद्धं कल्कं जातं षोडशांशेन ताम्रम् २६२
शुभ्रं कुर्यात्सर्वरोगप्रणाशं सत्यं चैतद्भाषितं भैरवेण ।
सेव्यं वल्लं वर्षमेतत्प्रयत्नाद्वृद्धत्वं नो जायते सर्वकालम् ॥ २६३ ॥

अश्मरीभिद्रसः ।

रसं सिन्दुरनामानं गन्धतैलेन मर्दितम् ।
भक्षयेद्वल्लमात्रं हि अश्मरीरोगघातकम् ।
लोट्टाकमूलस्वरसं शर्करासंयुतं पिबेत् ॥ २६४ ॥

अश्मरीभेदको रसः ।

श्वेताम्बरी तथा श्वेता चाश्वगन्धा पुनर्नवा ।
तासां रसेन संमर्द्य पारदं दोषवर्जितम् ॥ २६५ ॥
गन्धकेन द्विभागेन कारयेद्गोलमुत्तमम् ।
स्वेदयेद्याममर्धं तु भक्षितं चाश्मरीप्रणुत् ॥ २६६ ॥

त्रिपुरभैरवरसः ।

सूतकं मरिचं शुण्ठी टङ्कणं चामृतं तथा ।
गन्धकं चैकचत्वारिवेदवह्निधराधराः ।
चूर्णितो मधुना लीढो वाते त्रिपुरभैरवः ॥ २६७ ॥

द्वितीयत्रिपुरभैरवरसः ।

वेदवेदरसपृथ्व्यः शुण्ठीमरिचटङ्कणाः ।
चतुर्थो वत्सनाभश्च वाते त्रिपुरभैरवः ॥ २६८ ॥

अपस्मारेऽञ्जनम् ।

यष्टीहिङ्गुवचाशिग्रुशिरीषलशुनामयैः ।
साजमूत्रैरपस्मारे सोन्मादे नावनाञ्जनम् ॥ २६९ ॥

अपस्मारेऽञ्जनम् ।

मनोह्वा तार्क्ष्यजं चैव शकृत्पारावतस्य च ।
अञ्जनं हन्त्यपस्मारमुन्मादं च विशेषतः ॥ २७० ॥

विषमज्वरेऽञ्जनम् ।

तालकं निम्बतैलेन मर्दितं वटकीकृतम् ।
अञ्जने क्रियमाणे च ज्वरः शान्तिमुपैति हि ॥२७१॥

कृम्यङ्कुशो रसः ।

निम्बतैलेन संमिश्रं पारदं गन्धकं तथा ।
क्रिमिजित्क्वाथसंयुक्तं कृमिकोटिविनाशनम् ॥ २७२ ॥

हयचोलीवटिका।

रसं विषं गन्धकतालकं हि कटुत्रिकं वै त्रिफलासमेतम्।
सटङ्कणं वै जयपालबीजं संमर्दितं भृङ्गरसेन पश्चात् ॥ २७३ ॥[1]
मुद्गप्रमाणा गुटिका विधेया संसेविता पथ्यनुपानयोगैः।
सर्वा रुजो वै विनिहन्ति शीघ्रं गुटी प्रकर्षाद्धयचोलिकेयम् २७४

अष्टमाध्यायोपसंहारः।

प्रकाशामृतके ग्रन्थे प्रोक्ताश्चैते महारसाः।
शतसंख्यामिताः श्रेष्ठाः सर्वे रोगगणापहाः ॥ २७५ ॥
इति कथितरसानां संग्रहं सत्ययुक्तं
कतिचिदखिलशास्त्रे दृष्टमेवानुभूतम्।
पठति परमबुद्ध्या वैद्यविद्याविधिज्ञः
स भवति रसवेत्ता भूपगेहेऽतिमान्यः ॥२७६॥

इति पद्मनाभसूनुश्रीयशोधरविरचिते रसप्रकाशसुधाकरे
शतरसनिरूपणं नामाष्टमोऽध्यायः।

---

## अथ नवमोऽध्यायः।

अथौषधीनां नामानि कथ्यन्ते—
दिव्यौषधीनां नामानि कथ्यन्तेऽत्र मयाऽधुना।
चतुःषष्टिमिताः सम्यग्रसबन्धकराः पराः।
सोमवल्ली तथा सोमवृक्षः सोमकलालता ॥ १ ॥
भूपद्मिनी गोनसा चेदुच्चटा चेश्वरीलता।
भूतकेशी कृष्णलता लशुनी च रुदन्तिका ॥ २ ॥
वाराही सप्तपत्रा च नागिनी सर्पिणी तथा।
छत्रिणी चैव गोशृङ्गी ज्योतिर्नाम्नी च रक्तिका ॥ ३ ॥

---

1 अत्रोक्तानां दिव्यौषध्यादीनां मध्ये कासांचिल्लक्षणानि रसेन्द्रचूडामणौ षष्ठाध्याये, रससारे विंशतितमे पटले, अन्यत्र चोक्तानि, परं विस्तरभीत्या तानि सर्वाण्यत्र न लिखितानि, अतस्तत्तद्ग्रन्थेष्वेव द्रष्टव्यानि।

पत्रवल्ली काकिनी च चाण्डाली ताम्रवल्लिका।
पीतवल्ली च विजया महौषध्यमरीलता ॥ ४ ॥
नवनीता रुद्रवल्ली लम्बिनी भूमितुम्बिका।
गान्धर्वी व्याघ्रपादी च गोमारी च त्रिशूलिनी ॥ ५ ॥
त्रिदण्डी करसी भृङ्गवल्ली चमरिका तथा।
करवल्लीलता चैव वज्राङ्गी चिरवल्ल्यपि ॥ ६ ॥
रोहिणी बिल्विनी भूतशोचनी चैव कथ्यते।
मार्कण्डी च करीरी च अक्षरा कुटजा तथा ॥ ७ ॥
मूलकन्दाऽम्बुवल्ली च मुनिवल्ली च कीर्तिता।
घृतगन्धा निम्बुवल्ली तिलकन्दाऽतसीलता ॥ ८ ॥
बोधवल्ली सत्वगन्धा कूर्मवल्ली च माधवी।
विशाला च महानागी मण्डूकी क्षीरगन्धिका ॥ ९ ॥
चतुःषष्टिरिति प्रोक्ता दिव्यौषध्यो महाबलाः।
एकैकाया रसेनापि सूतो बन्धत्वमाप्नुयात् ॥ १० ॥
अनया साधितः सूतो जरादारिद्र्यनाशनः।
तास्तु लक्षणसंयुक्ताः सोमदेवेन भाषिताः ॥ ११ ॥
ग्रन्थविस्तरभीत्याऽत्र नाममात्रेण कीर्तिताः।

रसौषध्यः।

अतः परं रसौषध्यः प्रोच्यन्ते शास्त्रवर्त्मना ॥ १२ ॥
जलोत्पला चिञ्चिका च जलापामार्गमांसिके।
जलकुम्भी मेघनादा ईश्वरी चापराजिता ॥ १३ ॥
मालार्जुनी वेणुका च शिखिपादी च तिक्तिका।
काश्मर्यतिविषा प्रोक्ता समङ्गा जालिनी तथा ॥ १४ ॥
तुषाम्बुका च दुर्गन्धा पाषाणी शुकनासिका।
वनमाली वराही च गोजिह्वा मुशली तथा ॥ १५ ॥

पटोली शठिका मूर्वा पाटला जलमूलका ।
रसाजमारी कथिता शीशिका सितगन्धिनी ॥ १६ ॥
पोतकी च विषघ्नी च बृहती गुरडी तथा ।
तुलसी च विदारी च मञ्जिष्ठा चित्रपालिका ॥ १७ ॥
जलपिप्पलिका भार्गी मण्डूकी चोत्तमा तथा ।
चन्द्रोदका सारिवा च हरिणी कुक्कुटापि च ॥ १८ ॥
सर्पाक्षी हंसपादी च वनकूष्माण्डवल्लिका ।
मर्कस्फोटी धन्वयासः पागवः स्थलसारिणी ॥ १९ ॥
अर्धचन्द्रा हेमपुष्पी मोहिनी वज्रकन्दिका ।
अलम्बुषा च हलिनी रसचित्रा च नन्दिनी ॥ २० ॥
वृश्चिकाली गुडूची च वासा शृङ्गी च कथ्यते ।
अष्टषष्टिरिति प्रोक्ता रसौषध्यो महाबलाः ॥ २१ ॥
सूतस्य मारणे प्रोक्ता जारणे च नियामने ।

महौषध्यः ।

अष्टषष्टिर्महौषध्यः प्रोच्यन्ते रसशास्त्रतः ॥ २२ ॥
ऋद्धिः शोषिण्यधोगुप्ता श्रावणी सारिवा तथा ।
ज्योतिष्मती तेजवती रास्ना बाकुची बिम्बिका ॥२३॥
विषाणिका चाश्वगन्धा वर्षाभूः शरपुष्पिका ।
बला चातिबला नागबला दन्ती महाबला ॥ २४ ॥
द्रवन्ती नीलिनी चैव शतपुष्पा प्रसारिणी ।
वरा शतावरी चैला हपुषा सातला त्रिवृत् ॥ २५ ॥
स्वर्णक्षीरी तुगा पृथ्वी विशाला नलिकामली ।
इन्द्रवारुणिकाकाह्वे सिन्दुवारोऽजमोदिका ॥ २६ ॥
त्रायमाणाऽऽसुरी शङ्खपुष्पी च गिरिकर्णिका ।
धातकी कदली दूर्वा अम्लिका कासमर्दिका ॥ २७ ॥
जन्तुपादी च निर्गुण्डी द्राक्षा नीलोत्पलं शमी ।
नालिकेरी च खर्जूरी फल्गु शिंशी च मल्लिका ॥२८॥

वार्षिकी शाल्मली जाती ग्रीष्मवर्षा तु यूथिका ।
केकिचूडाऽजगन्धा च लक्ष्मणा तरुणीति च ॥ २९ ॥
अष्टषष्टिरिति प्रोक्ता महौषध्यो महाबलाः ।

रसाधिका महौषध्यः ।

अथेदानीं प्रवक्ष्यामि महौषध्यो रसाधिकाः ॥ ३० ॥
देवीलता कालवर्णी विजयासुरी सिंहिका ।
पालाशतिलका क्षेत्री संवीरा ताम्रवल्लिका ।
नाही कन्या तथा सोमराजिका च डुडुम्भटी ॥ ३१ ॥
कुबेराक्षी गृध्रनखी पर्पटी छिद्रलम्बिका ।
क्षुत्कारी दुग्धिका भृङ्गी गङ्गेटी शरपुङ्खिका ॥ ३२ ॥
अष्टावल्ली राजशमी पनसी च जयन्तिका ।
विषखर्परिकाऽवन्ती काकाण्डोलाऽम्बुमूलिका ॥ ३३ ॥
सिद्धेश्वरी हंसपादी खोटका शृङ्गरीटिका ।
अधःपुष्पी मधुराख्या शङ्खला गृञ्जनीति च ॥ ३४ ॥
जारावली महाराष्ट्री सहदेवेश्वरी तथा ।
काष्ठगोधामती देवगन्धारी रजनीकुंदी ॥ ३५ ॥
पलाशिनी नाकुली च काम्बोजी चाश्विनी तथा ।
चक्रवल्ली सर्पदष्टा शल्लकी रोहिता तथा ॥ ३६ ॥
तौवरी वङ्गजा राजपद्मा जम्बीरवल्लिका ।
गजपिप्पलिका भृङ्गवल्ली चैवार्कवल्लिका ॥ ३७ ॥
जन्तुकारा शिग्रवल्ली करवीरा शिवाटिका ।
नाराची काञ्चनी चाजगन्धेत्युक्ता रसोषधिः ? ॥३८॥
अष्टषष्टिरिति प्रोक्ता रसौषध्यो रसाधिकाः ।
रसे रसायने प्रोक्ताः सर्वकार्यकराः सदा ॥ ३९ ॥

इति श्रीपद्मनाभसूनुना श्रीयशोधरेण विरचिते रसप्रकाशसुधाकरे
दिव्यौषध्यादिनिरूपणं नाम नवमोऽध्यायः ।

---

## अथ दशमोऽध्यायः।

यन्त्रशब्दनिरुक्तिः।

**अथ यन्त्राणि वक्ष्यन्ते पारदो येन यन्त्र्यते।**
**तस्माद्यन्त्रस्य रूपाणि दर्शनीयानि शास्त्रतः॥ १॥**

यन्त्रनामानि।

**दोला पलभलीयन्त्रमूर्ध्वपातनकं च यत्।**
**अधःपातनकं चापि तिर्यक्पातनकं तथा॥ २॥**

---

१. अत्र यशोधरेण यन्त्राणां नामान्येवोक्तानि लक्षणानि नोक्तानि। अतो रसेन्द्रचूडामणिप्रभृतिग्रन्थेषु येषां यन्त्राणां लक्षणान्युपलब्धानि तानि क्रमेण लिख्यन्ते।

**१. दोलायन्त्रलक्षणम्**—विबध्य सौषधं सूतं सभूर्जत्रिगुणाम्बरे। रसपोट्टलिकां काष्ठे दृढं बद्ध्वा गुणेन हि॥ सन्धानपूर्णकुम्भान्तः प्रलम्बनगतिस्थिताम्। अधस्ताज्ज्वालयेदग्निं तत्तदुक्तक्रमेण हि। दोलायन्त्रमिति प्रोक्तं स्वेदनाख्यं तदेव हि॥ (र. चू. अ.५)

**२. पलभलीयन्त्रलक्षणम्**—यत्र लोहमये पात्रे पार्श्वयोर्वलयद्वयम्। तादृक् स्वल्पतरं पात्रं वलयप्रोतकोष्ठकम्॥ पूर्वपात्रोपरि न्यस्य स्वल्पपात्रे परिक्षिपेत्। रसं संमूर्च्छितं स्थूलपात्रमापूर्य काञ्जिकैः॥ द्वियामं स्वेदयेदेवं रसोत्थापनहेतवे। तत्स्यातप (त्ख) लभलीयन्त्रं रससाद्गुण्यकारकम् (र. चू. अ.५)

**३. ऊर्ध्वपातनयन्त्रलक्षणम्**—अस्मिन्नेव ग्रन्थे प्रथमाध्याये प्रोक्तम्। रसेन्द्रचूडामणौ च यथा,–अष्टाङ्गुलमिता सम्यग्वर्तुला च घटी तले। चतुरङ्गुलतः कण्ठादधो द्रोण्या समन्विता॥ चतुरङ्गुलविस्तारनिम्नया दृढबद्धया। तत्पिधानघटी मूले षोडशाङ्गुलविस्तरा॥ नवाङ्गुलकविस्तारकण्ठेन च समन्विता। पूर्वोक्तद्वारसंक्षिप्तां न्युब्जां दद्यात्परां घटीम्॥ सोर्ध्वे निम्ना च परितो दृढपालिकयाऽन्विता। स्थाल्यां द्रोण्यां क्षिपेत्तोयं पावकं ज्वालयेदधः॥ ऊर्ध्वपातनयन्त्रं हि नन्दिना परिकीर्तितम्। (र. चू. अ. ५.)

**४. अधःपातनयन्त्रलक्षणम्**—अस्मिन्नेव ग्रन्थे प्रथमाध्याये निर्दिष्टम्। रसेन्द्रचूडामणौ च यथा–उपर्यधस्तनस्थालीं क्षिपेदन्यामधोमुखीम्। स्थालिकां चिपिटीभूतां तलान्तर्लिप्तपारदाम्॥ क्षिप्त्वा तां पङ्किले गर्ते ज्वालयेन्मूर्ध्नि पावकम्। अधःपातनकं यन्त्रं तदेतत्परिकीर्तितम्। (र. चू. अ. ५.)

**५. तिर्यक्पातनयन्त्रलक्षणम्**—अस्मिन्नेव ग्रन्थे प्रथमाध्याये प्रोक्तं; रसेन्द्रचूडामणौ च यथा–क्षिपेद्रसं घटे दीर्घनताधोनालसंयुते। तन्नालं निक्षि-

**घटीयन्त्रं गर्भयन्त्रमिष्टिकाजलयन्त्रकम् ।**
**खल्वं डमरुकाख्यं च चिपिटाख्यं तुलाभिधम् ॥ ३ ॥**

---

पेदन्यद्धटकुक्ष्यन्तरे खलु ॥ तत्र रुद्ध्वा मृदा सम्यक् वदने घटयोरतः । अधस्ता-द्रसकुम्भस्य ज्वालयेत्तीव्रपावकम् ॥ इतरस्मिन् घटे तोयं प्रक्षिपेत्स्वादुशीतलम् । तिर्यक्पातनयन्त्रं हि वार्तिकैरभिधीयते । ( र. चू. अ. ५. )

६. **घटीयन्त्रलक्षणम्**—चतुष्प्रस्थजलाधारं चतुरङ्गुलिकाननम् । घटय-न्त्रमिदं प्रोक्तं तदाप्यायनकं मतम् । ( र. चू. अ. ५ )

७. **गर्भयन्त्रलक्षणम्**—गर्भयन्त्रं प्रवक्ष्यामि पिष्टिकास्तम्भकारणम् । चतुरङ्गुलदीर्घां तु त्र्यङ्गुलोन्मितविस्तराम् ॥ मृन्मयीं सुदृढां मूषां वर्तुलं कारये-न्मुखम् । लोहस्य विंशतिर्भागा भाग एकस्तु गुग्गुलोः ॥ सुश्लक्ष्णं पेषयित्वा तु वारं वारं पुनः पुनः । मूषालेपं दृढं कृत्वा लवणेन मृदम्बुभिः ॥ गर्ते तुषाग्निना भूमौ स्वेदयेन्मृदु मानवित् । अहोरात्रं त्रिरात्रं वा रसेन्द्रो भस्मतां व्रजेत् । ( र. चू. अ. ५. )

८. **इष्टिकायन्त्रलक्षणम्**—विधाय वर्तुलं गर्तं मल्लमत्र निधाय च । विनिधायेष्टिकां तत्र मध्यगर्तवतीं शुभाम् ॥ गर्तस्य परितः कुर्यात्पालिकामङ्गुलो-च्छ्रयाम् । गर्भे (गर्ते) सूतं विनिक्षिप्य गर्तास्ये वसनं क्षिपेत् ॥ निक्षिप्य गन्धकं तत्र मल्लेनास्यं निरुन्ध्य च । मल्लपालिकयोर्मध्ये मृदा सम्यङ्निरुन्ध्य च ॥ वनोत्पलैः पुटं देयं कपोताख्यं नचाधिकम् । इष्टिकायन्त्रमेतत्स्याद्गन्धकं तेन जारयेत् । ( र. चू. अ. ५. )

९. **जलयन्त्रलक्षणम्**—अस्मिन्नेव ग्रन्थे प्रथमाध्याये कथितं; रसेन्द्रचूडा-मणौ जलयन्त्रं कच्छपयन्त्रमिति नाम्ना प्रसिद्धं; यथा—विशालवदने भाण्डे तोयपूर्णे निवेशयेत् । खर्परं पृथुकं सम्यक् प्रसरे तस्य मध्यमे ॥ आलवालं बिडैः कृत्वा तन्मध्ये पारदं क्षिपेत् । तदूर्ध्वं च बिडं दत्त्वा मल्लेनारुन्ध्य यत्नतः ॥ पुटेदौचि-त्ययोगेन म्रियते तन्निगद्यते । यन्त्रं कच्छपसंज्ञं हि तदुक्तं रसजारणे. (र.चू.अ.५)

१०. **खल्वयन्त्रलक्षणम्**—अस्मिन्नेव ग्रन्थे प्रथमाध्याये प्रोक्तं; रसेन्द्र-चूडामणौ च यथा,—खल्वयोग्या शिला नीला श्यामा स्निग्धा दृढा गुरुः । उत्सेधेन नवाङ्गुलः खलु कलातुल्याङ्गुलायामवान् विस्तारेण नवाङ्गुलो रसमितै-र्निम्नस्तथैवाङ्गुलैः । पाल्यां द्व्यङ्गुलविस्तरश्च मसृणो द्रोण्यार्धचन्द्रोपमो घर्षश्चैव दशाङ्गुलश्च तदिदं खल्वाख्ययन्त्रं स्मृतम् ॥ अस्मिन्पञ्चपलः सूतो मर्दनीयो विशुद्धये । तत्तदौचित्ययोगेन खल्वेष्वेतेषु शोधयेत् ॥ द्वादशाङ्गुलविस्तारः खल्वो भवति वर्तुलः । चतुरङ्गुलनिम्नश्च मध्येऽतिमसृणीकृतः ॥ मर्दकश्चिपिटोऽध-

**लवणं कोष्ठिकाख्यं च अन्तरालिकसंज्ञिकम् ।**
**धूपयन्त्रं नाभियन्त्रं ग्रस्तयन्त्रं तथैव च ॥ ४ ॥**

---

स्तात्सुग्राहश्च शिखोपरि । लौहो नवाङ्गुलः खल्वो निम्नत्वे च षडङ्गुलः ॥ मर्दकोऽष्टाङ्गुलश्चैव तप्तखल्वाभियोग्ययम् । कृत्वा खल्वाकृतिं चुल्लीमङ्गारैः परिपूर्य ताम् ॥ तस्यां निवेश्य तं खल्वं पार्श्वे भस्त्रिकया धमेत् । तस्मिन् विमर्दिता पिष्टिः क्षारैरम्लैश्च संयुता ॥ प्रद्रवत्यतिवेगेन खेदतो नात्र संशयः । कृत कान्तायसा सोऽयं भवेत्कोटिगुणोत्तरः ॥ ( र. चू. अ. ५. )

११. **डमरुयन्त्रलक्षणम्**—यत्र स्थाल्युपरि स्थालीं न्युब्जां दत्त्वा निरुन्ध्य च । क्रियते रसपाकस्तद्यन्त्रं डमरुकं स्मृतम् ॥ ( र. चू. अ.५ )

१२. **तुलायन्त्रलक्षणम्**—वृन्ताकाकारमूषे द्वे तयोः कण्ठादधः खलु । प्रादेशमात्रनलिका मृदालिप्तसुसन्धिका ॥ तत्रैकस्यां क्षिपेत्सूतमन्यस्यां गन्धचूर्णकम् । निरुन्ध्य मुखयोर्वक्त्रं वालुकायन्त्रके क्षिपेत् ॥ अधोऽग्निं ज्वालयेदेतत्तुलायन्त्रमुदाहृतम् । शिलागन्धकतालाश्मजारणाय प्रकीर्तितम् । ( र. चू. अ. ५. )

१३. **लवणयन्त्रलक्षणम्**—एवं लवणनिक्षेपात्प्रोक्तं लवणयन्त्रकम् । ( र. चू. अ. ५. ) वालुकायन्त्रे एव वालुकास्थाने लवणनिक्षेपाल्लवणयन्त्रं भवतीत्यर्थः ।

१४. **कोष्ठिकायन्त्रलक्षणम्**—षोडशाङ्गुलविस्तीर्णं हस्तमात्रायतं समम् । धातुसत्वनिपातार्थं कोष्ठीयन्त्रमिति स्मृतम् । (र. र. स. अ.९) । रसेन्द्रचूडामणौ चान्यत्कोष्ठिकायन्त्रमुक्तं; यथा,—स्थूलभाण्डोदरस्यान्तर्वालुकां निक्षिपेच्छुभाम् । वितस्तिप्रमितोत्सेधं नलं तत्र निवेशयेत् ॥ अपक्वां मृन्मयीं कोष्ठीं द्वादशाङ्गुलकोच्छ्रयाम् । षडङ्गुलकविस्तीर्णां मध्येऽतिमसृणीकृताम् ॥ पञ्चाङ्गुलं पिधानं च तीक्ष्णाग्रं मुकुटाकृति । न न्यूनां नाधिकां कोष्ठीं कण्ठतो मसृणां बहिः । कोष्ठ्यां विनिक्षिपेद्गन्धं षट्पलं सूक्ष्मचूर्णितम् । कोष्ठ्यां त्रिपादिकां लौहीं विनिवेश्य स्थिरीकृताम् ॥ तस्यां च विन्यसेत्खारीं लौहीं वा कान्तलोहजाम् । तस्यां सूतं क्षिपेच्छुद्धं पलविंशतिमानतः ॥ ततो निधाय मतिमान् पिधानं मुकुटाकृतिम् । सन्धिबन्धं प्रकुर्वीत सुधामृत्स्नागुडादिभिः ॥ सन्धिबन्धे विशुष्के च क्षिपेदुपरि वालुकाः । भाण्डवक्त्रं निरुन्ध्याथ ज्वालयेत्तदधोऽनलम् ॥ खरं यामत्रयं यावत्ततो गन्धकजारणम् । पिधानलग्नधूमोऽसौ गलित्वा निपतेद्रसे ॥ एवं हि षड्गुणं गन्धं भुक्त्वा सूतो बली भवेत् । करोति खलु निर्दिष्टान् विशिष्टान् सकलान् गुणान् ॥ कोष्ठिकायन्त्रमेतद्धि नन्दिना परिकीर्तितम् । ( र. चू. अ. ५.)

विद्याधरं कुण्डकं च ढेकीसंज्ञमुदीरितम् ।
सोमानलं च निगडं किन्नरं भैरवं तथा ॥ ५ ॥

---

१५. **अन्तरालिकयन्त्रलक्षणम्**—कृत्वा लोहमयीं मूषां वृन्ताकाकारसंयुताम् । वितस्त्या संमितां कान्तलोहेन परिनिर्मिताम् ॥ मुण्डलोहोद्भवां वाऽपि कण्ठाधो ह्यङ्गुलादधः । ह्यङ्गुलं वलयं दद्यान्मध्यदेशेन कण्ठतः ॥ पिधानाधारकं चिञ्चापत्रविस्तीर्णकङ्कणम् । पिधानमन्तराविष्टं संमुखं श्लिष्टसन्धिकम् ॥ तलप्रविहितच्छिद्रं भाण्डं कृत्वा ह्यधोमुखम् । भाण्डवक्त्रं ततो मूर्ध्नि निरुन्ध्य च विशोष्य च ॥ स्थालीकण्ठे ततो दद्यात्पुटमग्निविधायकम् । एवंरूपं भवेद्यन्त्रमन्तरालिकसंज्ञकम् ॥ अनेन जारयेद्गन्धद्रुतिं गर्भद्रुतिं तथा । ( र. चू. अ. ५. )

१६. **धूपयन्त्रलक्षणम्**—विधायाष्टाङ्गुलं पात्रं लौहमष्टाङ्गुलोच्छ्रयम् । कण्ठाधो ह्यङ्गुले देशे जलाधारं हि तत्र च ॥ तिर्यग्लोहशलाकाश्च तन्वीस्तिर्यग्विनिक्षिपेत् । तनूनि स्वर्णपत्राणि तासामुपरि विन्यसेत् । पात्राधो निक्षिपेद्धूमं वक्ष्यमाणमिहैव हि । तत्पात्रं न्युब्जपात्रेण छादयेदपरेण हि ॥ मृदा विलिप्य सन्धिं च वह्निं प्रज्वालयेदधः । तेन पत्राणि कृष्णानि हतान्युक्तविधानतः ॥ रसश्चरति वेगेन द्रुतं गर्भे द्रवन्ति हि । गन्धालकशिलानां हि कज्जल्या वा मृताहिना ॥ धूपनं स्वर्णपत्राणां परमं परिकीर्तितम् । तारार्थे तारपत्राणि मृतवङ्गेन धूपयेत् ॥ धूपयेच्च यथायोग्यै रसैरुपरसैरपि । धूपयन्त्रमिति प्रोक्तं जारणाद्रव्यवाहने ॥ ( र. चू. अ. ५. ) धूपयन्त्रमेव स्वर्णजारणयन्त्रमिति नाम्ना रसहृदये प्रसिद्धम् । ( र. हृ. अ. ५. )

१७. **नाभियन्त्रलक्षणम्**—मल्लमध्ये चरेद्गर्तं तत्र सूतं सगन्धकम् । गर्तस्य परितः कुड्यं प्रकुर्यादङ्गुलोच्छ्रयम् ॥ ततश्चाच्छादयेत्सम्यग्गोस्तनाकारमूषया । सम्यक् तोयमृदा रुद्ध्वा सम्यगत्रोच्यमानया ॥ लेहवत्कृतबब्बूलक्वाथेन परिमर्दितम् । जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम् ॥ इयं हि जलमृत्प्रोक्ता दुर्भेद्या सलिलैः खलु । खटिकापटुकिट्टैश्च महिषीदुग्धमर्दितैः ॥ वह्निमृत्स्ना भवेद्घोरवह्नितापसहा खलु । एतया मृत्स्नया रुद्धो न गन्तुं क्षमते रसः ॥ विदग्धवनिताप्रौढप्रेमरुद्धः पुमानिव । नन्दी नागार्जुनश्चैव ब्रह्मज्योतिर्मुनीश्वरः ॥ वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले । ततो जलं विनिक्षिप्य वह्निं प्रज्वालयेदधः ॥ नाभियन्त्रमिदं प्रोक्तं नन्दिना सर्ववेदिना । अनेन जीर्यते सूतो निर्धूमः शुद्धगन्धकम् ॥ ( र. चू. अ. ५. )

१८. **ग्रस्तयन्त्रलक्षणम्**—मूषा मूषोदराविष्टा आद्यन्तसमवर्तुला । चिपिटा च तले प्रोक्ता ग्रस्तयन्त्रं मनीषिभिः ॥ ( र. चू. अ. ५. )

**वालुकायन्त्रकं चापि पातालं भूधराभिधम्।**
**सारणायन्त्रकं गुह्यं गन्धपिष्टकयन्त्रकम्॥ ६॥**

---

**१९. विद्याधरयन्त्रलक्षणम्**—यन्त्रं विद्याधरं ज्ञेयं स्थालीद्वितयसंपुटात्। (र. चू. अ. ५.) स्थालिकोपरि विन्यस्य स्थालीं सम्यङ्निरुन्ध्य च। ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा वह्निं प्रज्वालयेदधः॥ एद्विद्याधरं यन्त्रं हिङ्गुलाकृष्टिहेतवे। (र. र. स. अ. ९)

**२०. कुण्डकयन्त्रलक्षणम्**—स्थूलस्थाल्यां जलं क्षिप्त्वा वासो बद्ध्वा मुखे दृढम्। तत्र स्वेद्यं विनिक्षिप्य तन्मुखं प्रपिधाय च॥ अधस्ताज्ज्वालयेदग्निं तद्धि कुण्डकयन्त्रकम्। स्वेदनं यन्त्रमित्येतत् प्राहुरन्ये मनीषिणः॥ यद्वा स्थाल्यां जलं दत्त्वा तृणं क्षिप्त्वा जलोपरि। स्वेद्यद्रव्यं परिक्षिप्य पिधानं प्रपिधाय च॥ अधस्ताज्ज्वालयेद्वह्निं यन्त्रं तत्कुण्डकं स्मृतम् (र. चू. अ. ५)

**२१. ढेकीयन्त्रलक्षणम्**—भाण्डकण्ठादधश्छिद्रे वेणुनालं विनिक्षिपेत्। कांस्यपात्रद्वयं क्षिप्त्वा संपुटं जलगर्भितम्॥ नालास्यं तत्र संयोज्यं दृढं तच्चापि कारयेत्। युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र घटे रसः॥ अग्निना तापितो नालात्तोये तस्मिन् पतत्यधः। यावदुष्णं भवेत्सर्वं भाजनं तावदेव हि॥ जायते रससन्धानं ढेकीयन्त्रमिदं भवेत्।

**२२. सोमानलयन्त्रलक्षणम्**—ऊर्ध्वं वह्निरधश्चापो मध्ये तु रससंग्रहः। सोमानलमिदं प्रोक्तं जारयेद्गगनादिकम्॥ (र. चू. अ. ५.)

**२३. किन्नरयन्त्रविषये**—रससारे एवं पठ्यते—किन्नरं यन्त्रमादाय औषध्या लेपयेत्तलम्। नवसारयुतं सूतं यन्त्रमध्यगतं न्यसेत्॥ दद्याद्रसोपरि श्रावं सन्धिलेपं दृढं मृदा। लवणेन च संपूर्य द्वारं निरुन्ध्य यत्नतः॥ वह्निकोपरि संस्थाप्य दीप्ताग्निं ज्वालयेत्सुधिः॥ याममेकं समुत्तार्य कर्तव्यः शीतलो रसः। यन्त्रादुद्धृत्य यत्नेन सूतं मूर्च्छायमूर्च्छितम्॥ (र. सा. प. ५)

**२४. वालुकायन्त्रलक्षणम्**—पश्चाढवालुकापूर्णे भाण्डे निक्षिप्य यत्नतः। पच्यते रसगोलाद्यं वालुकायन्त्रमीरिम् (र. चू. अ. ५) भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके। कूपिकाकण्ठपर्यन्तं वालुकाभिश्च पूरिते॥ भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते। वालुकायन्त्रसंज्ञं हि यन्त्रमेतद्बुधैः स्मृतम्॥

**२५. पातालयन्त्रलक्षणम्**—हस्तप्रमाणं निम्नं च गर्तं कृत्वा प्रयत्नः। तस्मिन् भाण्डं च संस्थाप्य तथाऽन्यं पात्रमाहरेत्॥ तस्मिन्नौषधवर्गं च दत्त्वाऽन्यं च शरावकम्। मुखे संस्थाप्य छिद्राणि कृत्वा चैव शरावके॥ शरावसहितं पात्रं गर्तस्थे भाजने न्यसेत्। सन्धिलेपं ततः कृत्वा गर्तमापूर्य मृत्स्नया॥ पश्चादग्निं च

**कूपीयन्त्रं पालिकाख्यं दीपिकायन्त्रकं तथा।**
**स्थालीयन्त्रं भस्मयन्त्रं देवयन्त्रमुदीरितम् ॥ ७ ॥**
**घाणिकायन्त्रमुद्दिष्टं हंसपाकाभिधं तथा।**
**ऊनचत्वारिंशदत्र यन्त्राण्युक्तानि नामतः ॥ ८ ॥**

मूषापर्यायाः।

**अथ मूषाश्च कथ्यन्ते मृत्तिकाभेदतः क्रमात्।**
**मूषा कुमुदिका प्रोक्ता कोविका करहाहिका ॥ ९ ॥**
**पातिनी कथ्यते सैव वह्निमित्रा प्रकीर्तिता।**

---

प्रज्वाल्य स्वाङ्गशीतं समुद्धरेत्। पश्चात्तत्पात्रमध्यस्थं पात्रं युक्त्या समाहरेत् ॥ तदन्तःस्थं च तत्तैलं गृह्णीयाद्विधिपूर्वकम्। पातालाख्यमिदं यन्त्रं भाषितं शम्भुना स्वयम् ॥

२६. **भूधरयन्त्रलक्षणम्**—वालुकागूढसर्वाङ्गां यन्त्रे मूषां रसान्विताम्। दीप्तोत्पलैः संवृणुयात् यन्त्रं तद्भूधराह्वयम् ॥ ( र. चू. अ. ५. )

२७. **सारणायन्त्रलक्षणम्**—अस्मिन्नेव ग्रन्थे प्रथमाध्याये प्रोक्तम्।

२८. **पालिकायन्त्रलक्षणम्**—चषकं वर्तुलं लौहं विनताग्रोर्ध्वदण्डकम्। एतद्धि पालिकायन्त्रं बलिजारणहेतवे ॥ ( र. चू. अ. ५. )

२९. **दीपिकायन्त्रलक्षणम्**—कच्छपयन्त्रान्तर्गतमृन्मयपीठस्थदीपिका-संस्थः। यस्मिन्निपति सूतः प्रोक्तं तद्दीपिकान्त्रम् ॥ ( र. र. स. अ. ९ )

३०. **स्थालीयन्त्रलक्षणम्**—स्थाल्यां ताम्रादि निक्षिप्य मल्लेनास्यं निरु-न्ध्य च। पच्यते स्थालिकासंस्थं, स्थालीयन्त्रं तदीरितम्। ( र. चू. अ. ५. )

३१. **भस्मयन्त्रलक्षणम्**—भाण्डं वितस्तिगम्भीरं मृन्मयं सुदृढं नवम्। आदाय, भस्मनापूर्य अर्धं, तत्र निधाय च ॥ गोलकं तालकादीनां, शेषं पूर्याथ भस्मना। भाण्डवक्त्रं पिधायाथ मृदा सम्यग्विमुद्य च ॥ सन्धिं, कुर्यादधो वह्निं भस्मयन्त्रमुदीरीतम् ॥

३२. **हंसपाकयन्त्रलक्षणम्**—खर्परं सिकतापूर्णं कृत्वा तस्योपरि न्य-सेत्। अपरं खर्परं तत्र शनैर्मृद्वग्निना पचेत् ॥ पञ्चक्षारैस्तथा मूत्रैर्लवणैश्च बिडं ब्रतः। हंसपाकं समाख्यातं यन्त्रं तद्वार्तिकोत्तमैः ॥ ( र. च. अ. ५ )

चिपिटभैरवनिगडगन्धपिष्टककूपीदेवघाणिकाख्यानां सप्तयन्त्राणां लक्षणानि नोपलब्धानि।

योग[1]मूषालक्षणम्।

तुषभस्मयुता मृत्स्ना वाल्मिकी बिडसंयुता ॥ १० ॥
तया या रचिता मूषा योगमूषेति कथ्यते।

गा[2]रमूषालक्षणम्।

गारभूनागसत्वेन शणैर्दग्धतुषैरपि ॥ ११ ॥
मर्दिता महिषीक्षीरे मृत्तिका पक्षमात्रकम्।
तन्मृदा रचिता मूषा गारमूषेति कथ्यते ॥ १२ ॥

वरमूषालक्षणम्।

वस्त्रतुल्यास्तुषाङ्गारास्तच्चतुर्गुणमृत्तिका।
भू[3]नागमृत्तिके तुल्ये सैवैरेभिर्विमर्दिता ॥ १३ ॥
कथिता वरमूषा सा यामं वह्निं सहेत वै।

वर्णमूषालक्षणम्।

पूर्वोक्ता मृत्तिका या तु रक्तवर्गाम्बुभाविता ॥ १४ ॥
रक्तवर्गायुता घृष्टा कारिता मूषिका शुभा।
तूरीपुष्पकसीसाभ्यां लेपिता सा च मूषिका ॥ १५ ॥
वर्णोत्कर्षे प्रयोक्तव्या वर्णमूषेति कथ्यते।

रूप्यमूषालक्षणम्।

श्वेतवर्गेण वै लिप्ता रूप्यमूषा प्रकीर्तिता ॥ १६ ॥

बिडमूषा।

बिडेन रचिता या तु बिडेनैव प्रलेपिता।
देहलोहार्थसिद्ध्यर्थं बिडमूषेत्युदाहृता ॥ १७ ॥

---

१ योगमूषालक्षणं रसेन्द्रचूडामणावेवं पठ्यते,—"दग्धाङ्गारतुषोपेता मृत्स्ना वल्मीकसंभवा। तत्तद्विडसमायुक्ता तत्तद्विडविलेपिता ॥ तया या विहिता मूषा योगमूषेति कथ्यते। अनया साधितः सूतो जायते गुणवत्तरः"—इति।

२ गारभूषालक्षणं रसेन्द्रचूडामणावेवं पठ्यते,—"दग्धषड्गुणगाराढ्या किट्टाङ्गारशणान्विता। कृष्णमृद्भिः कृता मूषा गारमूषेत्युदाहृता"—इति। ३ "गारा च मृत्तिकातुल्या"—इति रसेन्द्रचूडामणौ पाठः।

वज्रमूषालक्षणम्।

गृहभूनागसत्वेन तुषमिष्या शणेन च।
मृत्समा महिषीक्षीरैर्दिवसत्रयमर्दिता ॥ १८ ॥
संस्थिता पक्षमात्रं हि पश्चान्मूषा कृता तया।
लेपिता मत्कुणस्याथ शोणितेन बलारसैः ॥ १९ ॥
चतुर्यामं ध्मापिता हि द्रवते नैव वह्निना ॥
वज्रमूषेति कथिता वज्रद्रावणहेतवे ॥ २० ॥

वृन्ताकमूषालक्षणम्।

वृन्ताकाकारमूषायां नालं कृत्वा दशाङ्गुलम्।
धत्तूरपुष्पवद्दीर्घं सुदृढं चैव कारयेत् ॥ २१ ॥
अष्टाङ्गुलं सच्छिद्रं च भवेद्वृन्ताकमूषिका।

गोस्तनीमूषालक्षणम्।

गोस्तनाकारमूषा[2] या मुखोपरिविमुद्रिता ॥ २२ ॥
सत्वानां द्रावणे शुद्धौ मूषा सा गोस्तनी भवेत्।

मल्लमूषालक्षणम्।

निर्दिष्टा मल्लमूषा या मल्लद्वितयसंपुटात् ॥ २३ ॥
रसपर्पटिकादीनां स्वेदनाय प्रकीर्तिता।

पक्व[3]मूषालक्षणम्।

अग्नौ या पाचिता शुष्का पक्वमूषा प्रकीर्तिता ॥ २४ ॥

महामू[4]षालक्षणम्।

अतिस्थूलाऽतिदीर्घा च मुखे किंचिच्च विस्तृता।
महामूषेति सा प्रोक्ता सत्त्वरद्रव्यशोधिनी ॥ २५ ॥

---

१ अस्याग्रे—"अनया खर्परादीनां मृदूनां सत्वमाहरेत्"—इति र. चू. अधिकं पठ्यते। २ "मूषा या गोस्तनाकारा शिखायुक्तपिधानका"—इति र.चू. पाठः। ३ पक्वमूषालक्षणं रसेन्द्रचूडामणावेवं पठ्यते,—"कुलालभाण्डरूपा या दृढा च परिपाचिता। पक्वमूषेति सा प्रोक्ता सत्त्वरद्रव्यशोधनी"—इति। ४ महामूषालक्षणं रसेन्द्रचूडामणावेवं पठ्यते—"तले या कूर्पराकारा क्रमादुपरि

मञ्जूषमूषालक्षणम्[1]।

षडङ्गुलोन्नता दीर्घा चतुरस्रा च निम्नका।
मञ्जूषाकारमूषा सा कथिता रसमारणे ॥ २६ ॥

गर्भमूषालक्षणम्।

भूमौ निखन्यमानां हि मूषामाच्छाद्य वालुकैः।
गर्भमूषा तु सा ज्ञेया पारदस्य निबन्धिनी ॥ २७ ॥

मुशलमूषालक्षणम्।

मूषा या चिपिटा मूले वर्तुला व्यङ्गुलाच्च या[2]।
मूषा सा मुशलाख्या स्याच्चक्रीबद्धरसे हिता ॥ २८ ॥

कोष्ठिकाप्रयोजनम्।

सत्वपातनकार्ये तु कोष्ठिका युज्यते बुधैः।
तासां तु विविधाकारान् कथयामि यथातथम् ॥ २९ ॥

अङ्गारकोष्ठिकालक्षणम्।

अङ्गारकोष्ठिका नाम राजहस्तप्रमाणका।
द्वादशाङ्गुलविस्तारा चतुरस्रा प्रकीर्तिता ॥ ३० ॥
वेष्टिता मृन्मयेनाथ एकभित्तौ च गर्तकम्।
वितस्तिमानं द्वारं च सार्धवैतस्तिकं दृढम् ॥ ३१ ॥
अधोभागे विधातव्या देहली धमनाय वै।
प्रादेशमात्रा भित्तिः स्यादुत्तरङ्गस्य चोर्ध्वतः ॥ ३२ ॥
प्रादेशमात्रं कर्तव्यं द्वारं तस्योपरि ध्रुवम्।
द्वारं चेष्टिकया रुद्ध्वा सन्धिरोधं च कारयेत् ॥ ३३ ॥
पूरयेत्कोकिलैस्तां तु भस्त्रिकां प्रधमेत्खलु।
कोकिलाधमनद्रव्यमूर्ध्वद्वारे विनिक्षिपेत् ॥ ३४ ॥

---

विस्तृता। स्थूलवृन्ताकवत्स्थूला महामूषेत्यसौ स्मृता ॥ सा चायोभ्रकसत्वादेः पुटाय द्रावणाय च"—इति।

१ मञ्जूषमूषालक्षणं रसेन्द्रचूडामणावेवं पठ्यते,—"मञ्जूषाकारमूषा या निम्नतायामविस्तरा। षडङ्गुलप्रमाणेन मूषा मञ्जूषसंज्ञका। भूमौ निखन्य तां मूषां दद्यात्पुटमथोपरि"—इति। २ 'अष्टाङ्गुलोच्छ्रया' इति र. चू. पाठः।

एषा चाङ्गारकोष्ठी च खराणां सत्वपातनी ।

पातालकोष्ठिकालक्षणम् ।

गर्तं खनेदृढं भूमौ द्वादशाङ्गुलमात्रकम् ॥ ३५ ॥
तन्मध्ये वर्तुलं गर्तं चतुरङ्गुलकं दृढम् ।
खर्परं स्थापयेत्तत्र मध्यगर्तोपरि दृढम् ॥ ३६ ॥
आपूर्य कौकिलैर्गर्तं प्रधमेदेकभस्त्रया ।
पातालकोष्ठिका सा तु मृदुसत्वस्य पातनी ॥ ३७ ॥

गारकोष्ठिकालक्षणम्[1] ।

वितस्तिप्रमिता निम्ना प्रादेशप्रमिता तथा ।
उपरिष्टात्पिधानं तु भूरिच्छिद्रसमन्वितम् ॥ ३८ ॥
गर्तमापूर्य चाङ्गारैः प्रधमेद्वङ्कनालतः ।
गारकोष्ठी समुद्दिष्टा सत्वपातनहेतवे ॥ ३९ ॥
वितस्तिप्रमितोत्सेधा सा बुध्ने चतुरङ्गुला ।
तिर्यक्प्रधमनाख्या च मृदुसत्वस्य पातनी ॥ ४० ॥

महापुटलक्षणम् ।

भूम्यां वै खनयेद्गर्तं द्विहस्तं चतुरस्रकम् ।
छगणानां सहस्रेण पूरयेत्तमनन्तरम् ॥ ४१ ॥
औषधं धारयेन्मध्ये तमाच्छाद्य वनोत्पलैः ।
सहस्रार्धैश्च वै सम्यग्वह्निं प्रज्वालयेत्ततः ॥ ४२ ॥
महापुटमिदं प्रोक्तं ग्रन्थकारेण निर्मितम् ।

गजपुटलक्षणम् ।

एकहस्तप्रमाणं हि चतुरस्रं च गर्तकम् ॥ ४३ ॥

---

१ गारकोष्ठीलक्षणं रसेन्द्रचूडामणावेवं पठ्यते,—“द्वादशाङ्गुलनिम्ना या प्रादेशप्रमिता तथा । चतुरङ्गुलतश्चोर्ध्वं वलयेन समन्विता ॥ भूरिच्छिद्रवतीं चक्रीं वलयोपरि विन्यसेत् । शिखित्रांस्तत्र निक्षिप्य प्रधमेद्वङ्कनालतः ॥ कुप्यं मृद्भिर्विधातव्यमरत्निप्रमितं दृढम् । गारकोष्ठीयमुद्दिष्टा सृष्टलोहविनाशिनी । अधोमुखं च तद्वक्रे नालं पञ्चाङ्गुलं खलु । वङ्कनालमिति प्रोक्तं दृढध्मानाय कीर्तितम्”—इति ।

